உ

# Pradosham presents

ॐ श्री गुरुभ्यो नमः

# नित्यपूजा विधिः - शिव पञ्चायतन पूजा

# Shiva Panchayathana Pooja/ Pradosha Pooja Vidhi

*Concise compilation of various Veda Mantras and Pooja procedures for Pradosha Pooja/daily pooja*

**www.pradosham.com**

ॐ श्री गुरुभ्यो नमः

# नित्यपूजा विधिः - शिव पञ्चायतन पूजा

*Pradosham* is pleased to present "Nitya Pooja Vidhi - Shiva PanchAyathana Pooja". This book covers most of the sequence that we follow during Pradosha Pooja. We hope - this *'one-for-all'* - *'easy-to-carry'* pocket edition would be found useful.

This can be used for daily pooja as well with slight alteration. Please consult the learneds to choose the correct path. Corrections, if any, would be carried in our future editions. As far as possible, we have given a brief meaning prior to starting of each segment, this will make you understand the meaning before reciting the verse.

We thank everyone, including Shri Paranur Sundaresan, Shri. Kumar Iyer, for helping us to complete this project.

We dedicate this book to Bhagawan Shri. Ramana Maharshi's Paadham.

EVER IN THE SERVICE OF LORD,
PRADOSHAM

**Letters we used in Sanskrit :**

‡ => Gum - ‡ =>Gus

व्द्य => Pls. read as द्भ्य = dbhya

# TABLE OF CONTENTS

## TABLE OF CONTENTS

**Sr.** **Contents** **Page No.**



## SRI RUDRA, CHAMAKA PRASHNAM



## VEDA SOOKTA PARAYANAM



## POOJA STHOTHRAMS

## TABLE OF CONTENTS

# TABLE OF CONTENTS

**Sr.** **Contents** **Page No.**

## UPANISHAD, SUKTAM



## NAMES, MONTHS, MEANINGS



------ SHUBAM - MANGALAM - OM NAMAH SHIVAYA ----

ॐ श्री गुरुभ्यो नमः

## नित्य पूजा विधिः - शिव पञ्चायतन पूजा

शुभं करोति कल्याणं आरोग्यं धनसम्पदः । शत्रु बुद्धि विनाशाय दीपज्योतिः नमोऽस्तु ते।।
दीपो ज्योतिः परं ब्रह्म दीपो ज्योतिः जनार्दनः । दीपो हरतु मे पापं सन्ध्या दीपो नमोऽस्तु ते।।

ॐ गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम्।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिःसीद सादनम् ।।

प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु । महासरस्वत्यै नमः।

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः । गुरुःसाक्षात् परब्रह्म तस्मै श्री गुरवे नमः ।
गुरवे सर्वलोकानां भिषजे भवरोगिणाम् । निधये सर्वविद्यानां श्री दक्षिणा मूर्तये नमः ।।
अस्मिन् गुरुचरणारविन्दाभ्यां नमः ।।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्या सम्प्रदाय कर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यो नमो महद्भ्यो
नमो गुरुभ्यः । श्री गुरुभ्यो नमः। हरिः ॐ ।।

ये अर्वाङुत्वा पुराणे वेदं विद्वाꣳ समभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं
द्वितीयं तृतीयं च हꣳसमिति यावतीर्वै देवतास्ताःसर्वा वेदविदि ब्राह्मणे वसन्ति तस्मात्
ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्त्तयेदेता एव देवताः प्रीणाति ।।

## आसन विधि :

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्हिताय कृष्णाय गोविन्दाय नमो नमः।
आब्रह्मलोकादा शेषात् आलोकालोकपर्वतात्। ये वसन्ति द्विजा देवाः तेभ्यो नित्यं नमो नमः।
अपसर्पन्तु ते भूता ये भूता भुविसंस्थिताः। ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया।।
उग्रभूतापिशाचाद्याः ये च वै भूमिधारकाः । एतेषामविरोधेन ब्रह्मकर्म समारभे ।।
अपक्रामन्तु भूतानि पिशाचाःसर्वतोमुखम्। सर्वेषामविरोधेन पूजाकर्म समारभे।।

अस्यश्री आसन महामन्त्रस्य, पृथिव्या मेरुपृष्ठ ऋषिः, अतलं छन्दः, कूर्मो देवता, आसने विनियोगः।

पृथ्वि त्वया धृता लोकाः देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्।।

*आचम्य ।*

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।

*प्राणायामं ।*

ॐ भूः - ॐ भुवः - ॐ सुवः - ॐ महः - ॐ जनः - ॐ तपः - ॐ सत्यम्
ॐ तत्सवितुर्वरेण्यं। भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्।
ॐ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःसुवरोम्।
ॐ ध्रुवन्ते राजावरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवं ।।
उत्तरोत्तराभिवृद्धिरस्तु ।। *दर्भेष्वासीनः, दर्भान् धारयमाणः ।।*

## ।। (१) गणपत्यथर्वशीर्षोपनिषत् ।।

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।।

ॐ शान्तिः शान्तिः शान्तिः ।।

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्ताऽसि । त्वमेव केवलं धर्ताऽसि । त्वमेव केवलं हर्ताऽसि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्माऽसि नित्यम् ।। (१)

ऋतं वच्मि । सत्यं वच्मि ।। २ ।।

अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् ।। ३ ।।

त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाऽद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । वं ज्ञानमयो विज्ञानमयोऽसि ।।४।।

सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति ।सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि ।। ५ ।।

त्वं गुणत्रयातीतः । त्वं अवस्थात्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्ययन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम् ।।६।।

गणादिं पूर्वमुच्चार्य वर्णादीं स्तदनन्तरम् । अनुस्वारःपरतरः । अर्धेन्दुलसितम् । तारेण ऋद्धम् । एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम् । अकारो मधयमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः सन्धानम्। संहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्रीच्छन्दः । गणपतिर्देवता । ॐ गं गणपतये नमः ।।७।।

एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ।।८।।

एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेःपुरुषात्परम्। एवं ध्यायति यो नित्यं स योगी योगिनां वरः ।।९।।

नमो व्रातपतये । नमो गणपतये । नमःप्रमथपतये । नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय वरदमूर्तये नमः ।।१०।।

एतदथर्वशीर्षं योऽधीते स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्नबाध्यते । स सर्वत्र सुखमेधते। स पञ्चमहापापात् प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः **प्रयुञ्जानो** पापोऽपापो भवति। सर्वत्राधीयानोऽपविघ्नो भवति। धर्मार्थकाममोक्षं च विन्दति । इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद् दास्यति स पापीयान् भवति । सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत् ।।११।।

अनेन गणपतिमभिषिञ्चति स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति स विद्यावान् भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति ।।१२।।

यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान् भवति । स मेधावान् भवति । यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति । यः साज्य समिद्भिर्यजति स सर्वं लभते स सर्वं लभते ।।१३।।

अष्टौ ब्राह्मणान् सम्यग् ग्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति । महाविघ्नात् प्रमुच्यते । महादोषात् प्रमुच्यते । महाप्रत्यवायात् प्रमुच्यते । स सर्वविद्भवति स सर्वविद्भवति । य एवं वेद । इत्युपनिषत् ।। १४।।

ॐ शान्तिः शान्तिः शान्तिः ।।

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।।

ॐ शान्तिः शान्तिः शान्तिः ।।

## (२) गणपति पूजा विधिः

*सङ्कल्पम् ।*

ममोपात्त समस्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव विद्याबलं दैवबलं तदेव श्री लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि। करिष्यमाणस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं आदौ विघ्नेश्वर पूजां करिष्ये।। *(एवं द्विवीयी) । अपउपस्पृश्य ।।*

*(Recite twice from Karishya Manasya & wash your hands)*

ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिस्सीद सादनम् ।। श्रीमन् महागणपतये नमः।। ॐ भूर्भुवस्सुवरोम् अस्मिन् हरिद्राबिम्बे सुमुखं सपरिवारं विघ्नेश्वरं महागणपतिं ध्यायामि।

महागणपतिं आवाहयामि ।

ॐ महागणपतये नमः रत्नसिंहासनं समर्पयामि ।

ॐ महागणपतये नमः पादयोः पाद्यं समर्पयामि ।

ॐ महागणपतये नमः हस्तयोः अर्घ्यं समर्पयामि ।

ॐ महागणपतये नमः आचमनीयं समर्पयामि ।

ॐ महागणपतये नमः स्नपयामि ।

आपोहिष्ठा मयोभुवः। तान ऊर्जे दधातन।। महेरणाय चक्षसे। यो वः शिवतमो रसः।

तस्य भाजयते हनः। उशतीरिव मातरः। तस्मा अरङ्गमामवः। यस्यक्षयाय जिन्वथ।

आपोजनयथा च न :।। ॐ भूर्भुवःसुवः।। स्नानानन्तरं आचमनीयं समर्पयामि। *(offer water)*

ॐ महागणपतये नमः वस्त्रार्थं अक्षतान् समर्पयामि। *(shower yellow rice)*

ॐ महागणपतये नमः उपवीतार्थं अक्षतान् समर्पयामि। *(shower yellow rice)*

ॐ महागणपतये नमः दिव्यपरिमळ गन्धान् धारयामि। *(daub chandan)*

ॐ महागणपतये नमः गन्धस्योपरि हरिद्राकुङ्कुमं समर्पयामि। *(daub kumkum)*

ॐ महागणपतये नमः अलङ्कारणार्थे अक्षतान् समर्पयामि। *(shower yellow rice)*

ॐ महागणपतये नमः आभरणार्थे अक्षतान् समर्पयामि। *(shower yellow rice)*

ॐ महागणपतये नमः पुष्पमालां समर्पयामि। *(garlanding the deity)*

ॐ महागणपतये नमः पुष्पैः पूजयामि। *(recite following mantras & shower flowers)*

ॐ सुमुखाय नमः। ॐ एकदन्ताय नमः। ॐ कपिलाय नमः। ॐ गजकर्णकाय नमः।

ॐ लम्बोदराय नमः। ॐ विकटाय नमः। ॐ विघ्नराजाय नमः। ॐ विनायकाय नमः ।

ॐ धूमकेतवे नमः। ॐ गणाध्यक्षाय नमः। ॐ फालचन्द्राय नमः।

ॐ गजाननाय नमः। ॐ वक्रतुण्डाय नमः। ॐ शूर्पकर्णाय नमः। ॐ हेरम्बाय नमः।

ॐ स्कन्दपूर्वजाय नमः। ॐ सिद्धिविनायकाय नमः।

ॐ महागणपतये नमः नानाविध परिमळपत्रपुष्पाणि समर्पयामि।।

ॐ महागणपतये नमः धूपं आघ्रापयामि।। (show dhoopam)

ॐ महागणपतये नमः दीपं सन्दर्शयामि।। (show dheepam)

ॐ महागणपतये नमः धूपदीपानन्तरं आचमनीयं समर्पयामि।। (pour water)

ॐ भूर्भुवःसुवः । ॐ तत्सवितुर्वरेण्यं। भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।

*इति प्रोक्षय ।*

*(प्रातः - morning)* सत्यं त्वर्तेन परिषिञ्चामि।

*(सायं - evening)* ऋतं त्वा सत्येन परिषिञ्चामि।)

अमृतोपस्तरणमसि - *इति किञ्चिज्जलं विसृज्य ।* *( sprinkle water )*

ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा ।

ॐ समानाय स्वाहा । ॐ ब्रह्मणे स्वाहा । ब्रह्मणि म आत्मा अमृतत्वाय।

ॐ महागणपतये नमः निवेदनं समर्पयामि।।

मध्ये मध्ये अमृतपानीयं समर्पयामि। अमृतापिधानमसि ।

हस्तप्रक्षालनं समर्पयामि। पादप्रक्षालनं समर्पयामि। पुनराचमनीयं समर्पयामि ।

ॐ भूर्भुवःसुवः । पूगीफलसमायुक्तं नागवल्ली दलैर्युतम्। कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।। महागणपतये नमः कर्पूर ताम्बूलं समर्पयमि ।।

*नीराञ्जन मन्त्रः*

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात्।।

ॐ महागणपतये नमः कर्पूरनीराजनं सन्दर्शयामि।

नीराजनानंतरं आचमनीयं समर्पयामि। रक्ष रक्षां धारयामि।

ॐ श्री महागणपतये नमः वेदोक्त मन्त्रपुष्पं समर्पयामि । स्वर्णपुष्पं समर्पयामि ।

पारिजात पुष्पं समर्पयामि। छत्रं धारयामि। नृत्तं दर्शयामि। वाद्यं घोषयामि।

गीतं श्रावयामि। आन्दोळिकां आरोपयामि। अश्वं आरोपयामि। गजं आरोपयामि।

रथं आरोपयामि। समस्त राजोपचार-मन्त्रोपचार-वेदोपचारान् समर्पयामि।।

## अथ प्रार्थना

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ।

धूमकेतुर्गणाध्यक्षो फालचन्द्रो गजाननः । वक्रतुण्डः शूर्पकर्णो हेरम्ब स्कन्दपूर्वजः ।।

द्वादशैनानि नामानि यःपठेत् श्रुणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।

सङ्ग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते ।।

महागणपतये नमः अनेक कोटी प्रदक्षिण नमस्कारान् समर्पयामि ।

## (३). **प्रधान पूजा सङ्गल्पं** - MAIN POOJA SANKALPAM

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।

ॐ भूः - ॐ भुवः - ॐ सुवः - ॐ महः - ॐ जनः - ॐ तपः - ॐ सत्यम्

ॐ तत्सवितुर्वरेण्यं। भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्।

ॐ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःसुवरोम्।

*सङ्कल्पः ।*

ममोपात्त समस्त दुरितक्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं शुभे शोभने मुहूर्ते आद्य ब्रह्मणः द्वितीय परार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमेपादे जम्बूद्वीपे भारतवर्षे भरतखण्डस्य मेरोः पश्चिमदिग्भागे उत्तरे पार्श्वे अरभ्य महासमुद्रतीरे केतुमाल्य वर्षे **दुबै/अबुदाभि** महानगर्यां प्रभवादि षष्ट्यां संवत्सरानां मध्ये ----------*(Year)* नाम संवत्सरे ----------- *(उत्तरायणे/दक्षिणायने)*-----------ऋतौ ---------मासे*(month)* -----------पक्षे *(कृष्ण/शुक्ल)* -------------शुभतिथौ (lunar date) वासरः वासरस्तु ------------------ वासरयुक्तायां *(day)* --------नक्षत्रयुक्तायां *(star)* शुभयोग शुभकरण एवङ्गुण विशेषेण विशिष्टायां अस्यां ------शुभतिथौ (lunar date), ममोपात्त समस्त दुरितक्षयद्वारा श्री परमेश्वरप्रीत्यर्थं -------गोत्रोद्भवस्य *(gothram)* ------- नक्षत्रे *(star)* ----- राशौ जातस्य *(zodiac sign)* -----शर्मणः *(your name)* मम (अस्य यजमानस्य) -----नक्षत्रे *(star)* -----राशौ *(zodiac sign)* जातायाः -----नाम्नयाः *(wife's name)* मम धर्मपत्न्याश्च (अस्य यजमानस्य धर्मपत्न्याश्च) अस्माकं सहकुटुम्बानां बन्धुजनवर्गस्य क्षेम-स्थैर्य-वीर्य-विजय-आयुरारोग्य-ऐश्वर्याणां अभिवृद्ध्यर्थं धर्म-अर्थ-काम-मोक्ष चतुर्विधफल पुरुषार्थ सिद्ध्यर्थं श्री महागणपति प्रसाद सिद्ध्यर्थं, इष्टदेवता, कुलदेवता, ग्रामदेवता, गृहदेवता प्रसाद सिद्ध्यर्थं साम्बपरमेश्वरप्रसाद सिद्ध्यर्थं प्रसादेन सर्वारिष्टशान्त्यर्थं सर्वानुकूलता सिद्ध्यर्थं सर्वमनोरथ अवाप्त्यर्थं ऐहिकामुष्मिक श्रेयोभिः अभिवृद्ध्यर्थं साम्बपरमेश्वर पादारविन्दयोः अचञ्चल निष्कपट भक्तिसिद्ध्यर्थं - महा प्रदोष पुण्यकाले / नित्य पञ्चायतन / शुभ मुहूर्ते पुण्यकाल पूजां, महान्यास / लघुन्यास पुरःसर अन्योन्य सहायेन एकवार / एकादशवार, रुद्रजपयुक्त रुद्राभिषेकेन रुद्र अर्चनाञ्च करिष्ये । पूर्वोक्त पूज महान्यास तदङ्गत्वेन घण्टा पूजां, कलश पूजां, शङ्ख पूजां, आत्म पूजां, पीठ पूजां, द्वारपालक पूजां, वरुण पूजां च करिष्ये।। *अपउपस्पृश्य ।।*

ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिस्सीद सादनम् ।।
अस्माद् हरिद्राबिम्बाद् सुमुखं सपरिवारं विघ्नेश्वरं महागणपतिं यदासुखं यदास्थानं
प्रतिष्ठापयामि ।। शोभनार्थे क्षेमाय पुनरागमनाय च ।।
क्षत्रस्य राजा वरुणोऽधिराजः। नक्षत्राणां शतभिषग्वसिष्ठः।
तौ देवेभ्यः कृणुतो दीर्घमायुः।। महागणपति प्रसाद सिद्धिरस्तु ।।

## (४) घण्टपूजा विधिः (Ring the bell while reciting mantra)

घण्टाय नमः । दिव्यगन्धान्धारयामि । *(घण्टानादं कृत्वा)* आगमार्थं तु देवानां गमनार्थं तु रक्षसां।
कुर्यात् घण्टारवं तत्र देवताह्वानलाञ्छनम् ।।
अपसर्पन्तु ते भूता ये भूता भुविसंस्थिताः। ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया।।

## (५) कलश पूजा विधिः

*कलशं गन्ध-अक्षत-पत्र-पुष्पैः अभ्यर्च्य, कलशं स्पृष्ट्वा।*
(fill pancha-pathram with water, daub chandan/kumkum on
the four sides of the vessel)
ॐ कलशाय नमः दिव्यपरिमळ गन्धान्धारयामि । (put flower, akshatha inside)
ॐ गङ्गायै नमः । ॐ यमुनायै नमः । ॐ गोदावर्यै नमः । ॐ सरस्वत्यै नमः ।
ॐ नर्मदायै नमः । ॐ सिन्धवे नमः । ॐ कावेर्यै नमः। सप्त कोटि महातीर्थान्
आवाहयामि ।। (keep your right palm facing down on the top of
the panchapathram and recite the following mantras )

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाःस्मृताः।
कुक्षौ तु सागराःसर्वे सप्तद्वीपा वसुन्धरा।। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः।
अङ्गैश्च सहिताःसर्वे कलशाम्बुसमाश्रिताः। आयान्तु शिव पूजार्थं दुरितक्षयकारकाः ।
गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।।
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
*(कलश जलेन सर्वोपकरणानि सर्वपूजाद्रव्याणि च प्रोक्ष्य आत्मानञ्च प्रोक्ष्यात्)।।*
(sprinkle water from Kalasham over pooja/abhisheka items and self)

## (६). शङ्ख पूजा विधिः

*कलश जलेन शङ्खं प्रक्षाल्य; पुनः कलश जलेन शङ्खं गायत्र्या प्रपूरय ।*

ॐ पाञ्चजन्याय नमः दिव्यपरिमळगन्धां धारयामि ।

ॐ शङ्खमूले ब्रह्मणे नमः । ॐ शङ्खमध्ये विष्णवे नमः । ॐ शङ्खाग्रे रुद्राय नमः ।

ॐ आदित्यमण्डलाय नमः । ॐ सोममण्डलाय नमः । ॐ चन्द्रशेखराय नमः ।

शङ्खं चन्द्रार्कदैवत्यं मध्ये वरुणसंयुतम् पृष्ठे प्रजापतिश्चैव अग्रे गङ्गा सरस्वति ।।

त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया। शङ्खे तिष्ठन्ति विप्रेन्द्राः तस्माच्छङ्खं प्रपूजयेत्।।

त्वं पुरा सागरोत्पन्नः विष्णुना विधृतः करे। पूजितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ।।

गर्भा देवारिनारीणां विशीर्यन्ते सहस्रधा । तव नादेन पाताळे पाञ्चजन्य नमोऽस्तु ते ।।

ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ।।

*(Recite 5 times silently)*

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवःसमिंधते ।

विश्वस्यां विशि प्रविविशिवाꣳ समीमहे स नो मुञ्चत्वꣳहसः ।।

*शङ्ख जलेन कलशं पूरयित्वा (pour water from conch to kalasham)*

*शिष्ट जलेन* ॐ भूर्भुवःसुवो भूर्भुवःसुवो भूर्भूवस्सुवः *इति सर्वोपकरणानि प्रोक्ष्य आत्मानं च प्रोक्ष्य । तच्छेषं विसृज्य । (sprinkle water over puja dravyams, on self and pour the balance water on the earth)*

*कलश जलेन पुनः शङ्खं गायत्र्या पूरयित्वा।।*

*(pour water from Kalasham to conch, reciting Gaayathri mantram three times).*

## (७) आत्मपूजा विधिः

ॐ आत्मने नमः । दिव्यगन्धान् धारयामि ।

ॐ आत्मने नमः । ॐ अन्तरात्मने नमः । ॐ जीवात्मने नमः । ॐ योगात्मने नमः।

ॐ परमात्मने नमः । ॐ ज्ञानात्मने नमः ।

समस्तोपचारान् समर्पयामि ।

देहो जीवालयः प्रोक्तो जीवो देवः सनातनः । त्यजेदज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत्।।

## (८) पीठ पूजा विधिः

पीठ पूजां करिष्ये ।।

१) ॐ आधारशक्त्यै नमः २) ॐ मूलप्रकृत्यै नमः ३) ॐ आदिकूर्माय नमः
४) ॐ आदिवराहाय नमः ५) ॐ अनन्ताय नमः ६) ॐ पृथिव्यै नमः
७) ॐ रत्नमण्टपाय नमः ८) ॐ रत्नवेदिकायै नमः ९) ॐ स्वर्णस्तम्भाय नमः
१०) ॐ श्वेतच्छत्राय नमः ११) ॐ कल्पकवृक्षाय नमः १२) ॐ क्षीरसमुद्राय नमः
१३) ॐ सितचामराभ्यां नमः १४) ॐ योगपीठासनाय नमः

समस्तोपचारान् समर्पयामि ।।

## (९) द्वारपाल पूजा विधिः

द्वारपाल पूजां करिष्ये ।

ॐ पूर्वद्वारे द्वारश्रियै नमः ॐ धात्रे नमः ॐ विधात्रे नमः ।
ॐ दक्षिणद्वारे द्वारश्रियै नमः ॐ गुहाय नमः ॐ गणपतये नम :।
ॐ पश्चिमद्वारे द्वारश्रियै नमः ॐ नन्दीश्वराय नमः ॐ क्षेत्रपालाय नमः ।
ॐ उत्तरद्वारे द्वारश्रियै नमः ॐ चण्डीश्वराय नमः ॐ भृङ्गीश्वराय नमः ।
ॐ ऊर्ध्वद्वारे द्वारश्रियै नमः ॐ आकाशाय नमः ॐ अन्तरिक्षाय नमः ।
ॐ अधोद्वारे द्वारश्रियै नमः ॐ भूम्यै नमः ॐ पातालाय नमः ।

द्वारपाल पूजां समर्पयामि।

## (१०). कुम्भ आवाहनं

ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतःसुरुचो वेन आवः । सबुध्निया उपमा अस्य विष्ठाःसतस्श्च योनिमसतश्च विवः । नाके सुपर्णमुपयत्पतन्तं हृदा वेनन्तो अभ्यचक्षतत्वा । हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् । आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम्। भवा वाजस्य सङ्गथे । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु ।।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे । इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरो रथीतमं रथीनां वाजानां सत्पतिं पतिम् ।

ॐ आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्न-मापोऽमृत-माप-स्सम्राडापो विराडाप-स्स्वराडाप-श्छन्दाग्-ष्यापो ज्योतीग्-ष्यापो यजूग्-ष्याप-स्सत्यमाप्-स्सर्वादेवता आपो भूर्भुवःसुवराप ओम् ।।

ॐ अपः प्रणयति । श्रद्धा वा आपः । श्रद्धामेवारभ्य प्रणीय प्रचरति । अपः प्रणयति । यज्ञो वा आपः । यज्ञमेवारभ्य प्रणीय प्रचरति । अपः प्रणयति । वज्रो वा आपः । वज्रमेव भ्रातृव्येभ्यः प्रहत्य प्रणीय प्रचरति । अपः प्रणयति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै । अपः प्रणयति । आपो वै देवानां प्रियं धाम । देवानामेव प्रियं धाम प्रणीय प्रचरति । अपः प्रणयति । आपो वै सर्वादेवताः । देवता एवारभ्य प्रणीय प्रचरति। अपः प्रणयति । आपो वै शान्ताः । शान्ताभिरेवास्यशुचं शमयति । देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेणवसोः सूर्यस्य रश्मिभिः।।

ॐ कूर्चाग्रैः राक्षसान् घोरान् छिन्दि कर्मविघातिनः । त्वामर्पयामि कुम्भेऽस्मिन् साफल्यं कुरु कर्मणि ।

ॐ वृक्षराजसमुद्भूताः शाखायाः पल्लवत्वचः । युष्मान् कुम्भेष्वर्पयामि सर्वपापापनुत्तये । नालिकेरसमुद्भूत त्रिनेत्र हरसत्तम । शिखया दुरितं सर्वं पापं पीडां च मे नुद । स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ।।

*(कुम्भेषु वरुणावाहनम्)* तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ।। ओं भुर्भुवःसुवरोम् । अस्मिन् कुम्भे सोमास्कन्द स्वरूपेण वरुणमावाहयामि । वरुणस्य इदमासनम् । वरुणाय नमः । रत्नसिंहासनं समर्पयामि ।

पादयोः पाद्यं समर्पयामि । अर्घ्यं समर्पयामि । आचमनीयं समर्पयामि । शुद्धोदक स्नानं समर्पयामि । स्नानानन्तरम् आचमनीयं समर्पयामि । वस्त्र, यज्ञोपवीत, आभराणार्थे अक्षतान्

समर्पयामि । दिव्य परिमळगन्धां धारयामि । गन्धस्योपरि हरिद्रा कुङ्कुमं समर्पयामि। पुष्पमालां समर्पयामि । पुष्पैः पूजयामि ।।

ॐ गङ्गायै नमः। ॐ यमुनायै नमः। ॐ गोदावर्यै नमः। ॐ सरस्वत्यै नमः ।

ॐ नर्मदायै नमः। ॐ सिन्धवे नमः। ॐ कावेर्यै नमः । ॐ थीर्थराजाय नमः ।

ॐ प्रचेतसे नमः। ॐ स्वरूपिणे नमः। ॐ अपाम्पतये नमः।ॐ मकरवाहनाय नमः ।

ॐ जलाधिपतये नमः। ॐ पाशहस्ताय नमः ।ॐ वरुणाय नमः ।

नानाविध परिमळ पत्रपुष्पाणि समर्पयामि ।।

धूपं, दीपं, नैवेद्यं (गुळोपहारं निवेदयामि)।

कर्पूरताम्बूलं निवेदयामि।।

*नीरांजनमन्त्रा:*

ॐ हिरण्यपात्रं मधोः पूर्णं दधाति । मद्व्योसानीति । एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुस्तेजो दधाति।। वरुणाय नमः । कर्पूरनीराजनं समर्पायमि।

# ११. महान्यासं

## (१) केशाति पातान्द न्यासं

*BhodhAyana Maharshi has presented the version of MahanyAsam which is recited prior to Ekadasha Rudra Japam and this procedure is called 'NyAsa Jadila Kriyakramam'. This is recited in Temples, Residences in an elaborate way.*

*Covering all parts of the body from head to feet, Sri Rudra mantram is recited to invoke and transform ourselves as a part of Sri Rudra roopa. Guided with this mantra vakyams, erect a shield around us (dhigbhandam), derive sharp observation through eyes and by using the same mantras as weapons, be prepared to win over enmity. Thus making sure to prevent all hindrances, should we be ready to begin Sri Rudra Japam for smooth performance of Sri Rudra Abhishekam.*

*While performing NyAsam by touching respective body-parts, recalling each dedicated Devtha is of utmost imortance.*

*अथात पञ्चाङ्गरुद्राणां न्यासपूर्वकं जप (होम) अर्चनाभिषेक विधिं व्याख्यास्यामः।।*

या ते रुद्र शिवातनूरघोरापापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि।।

*शिखायै नमः* ।। (tuft - rearside of head) 1.1

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।। *शिरसे नमः*।। (head) 1.2

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।।

*ललाटाय नमः* (forehead)1.3

हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ।। *भ्रुवोर्मध्याय नमः* (space bet. eyebrows) 1.4

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् ।।

*नेत्राभ्यां नमः* ।। (eyes)1.5

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च ।

*कर्णाभ्यां नमः* ।। (two ears)1.6

मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते ।। *नासिकायै नमः* ।। (nose)1.7

अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे । निशीर्यशल्यानां मुखा शिवो नः सुमना भव ।।

*मुखाय नम :* ।। (face)1.8

नीलग्रीवाशिशिति कण्ठाशर्वा अधः क्षमाचराः । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।।

*कण्ठाय नमः* ।। (neck)1.9

नीलग्रीवाशिशितिकण्ठा दिवꣳ रुद्रा उपश्रिताः । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।।

*उपकण्ठाय नमः* ।।(back side of neck)1.10

नमस्ते अस्त्वायुधायानाताताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ।।

*बाहुभ्यां नमः।।* (shoulders) 1.11

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज ।।

*उपबाहुभ्यां नम :* ।। (between wrist and shoulders) 1.12

ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।।

*हस्ताभ्यां नमः* ।। (palm) 1.13

सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः । भवे भवे नातिभवे भवस्वमाम् ।

भवोद्भवाय नमः ।। *अङ्गुष्ठाभ्यां नमः* ।। (thumb) 1.15

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।

*तर्जनीभ्यां नमः* ।। (index finger) 1.16

अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।
*मध्यमाभ्यां नमः* ।। (middle finger) 1.17

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।।
*अनामिकाभ्यां नमः* (ring finger) 1.18

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।। *कनिष्ठिकाभ्यां नमः* ।। (small finger) 1.19

नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यः ।। *हृदयाय नमः* ।। (heart) 1.20

नमो गणेभ्यो गणपतिभ्यश्च वो नमः । *पृष्ठाय नमः* ।। (back side) 1.21

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः । *कक्षाभ्यां नम :* ।। (arm pit) 1.22

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः।।*पार्श्वाभ्यां नमः* ।। (side of ribs ) 1.23

विज्यं धनुःकपर्दिनो विशल्यो बाणवाꣳ उत । अनेशन्नस्येषव आभुरस्य निषङ्गथिः।
*जठराय नम :* ।। (inner stomach) 1.24

हिरण्यगर्भःसमवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार पृथिवीन्द्यामुतेमां कस्मै देवाय हविषा विधेम ।। *नाभ्यै नमः* ।। (navel) 1.25

मीढुष्टम शिवतम शिवोनःसुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ।। *कट्यै नमः* ।। (hip) 1.26

ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।
*गुह्याय नमः* ।। (private parts) 1.27

ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।
*अण्डाभ्यां नमः* ।। (testicles) 1.28

स शिरा जातवेदाः । अक्षरं परमं पदम् । वेदानाꣳ शिरसि उत्तमं जातवेदसे शिरसि माता आयुष्मन्तं करोतु माम् ।। *अपानाय नमः* ।। (anus) 1.29

मानो मुहान्तमुत मानो अर्भकं मा न उक्षन्तमुतमा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ।। *ऊरुभ्यां नमः* ।। (thighs) 1.30

एष ते रुद्रभागस्तञ्जुषस्व तेनावसेन परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासाः।। *जानुभ्यां नमः* । (knees) 1.31

स॒ꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता। बृहस्पते परिधीया रथेन रक्षोहामित्राꣳ अपबाधमानः।। *जङ्घाभ्यां नमः* ।। (ankle) 1.32

विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ।। *गुल्फाभ्यां नमः* ।। (calf muscle ) 1.33

ये पथां पथिरक्षय ऐलबृदा यव्युधः । तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ।।

*पादाभ्यं नमः* ।। (feet ) 1.34

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहीꣳश्चसर्वाञ्जम्भयन् सर्वांश्च यातुधान्य : ।।

*कवचाय नमः* ।। (keep your hands crossed to touch opposite shoulders) 1.35

नमी बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ।।

*उपकवचाय नम* :।। (keep hands crossed on the back) 1.36

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहन्तेभ्यो करन्नमः ।।

*तृतीयनेत्राय नम* । (keep middle finger on the centre of head and other two on two eyes) 1.37

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ।।

*अस्त्राय नमः* ।। (clap left hand palm with right hand index & middle finger) 1.38

य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे। तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि।।

*दिग्बन्धाय नमः* ।।

## १२. (२) दशाङ्गन्यासः (Perform Nyasam in 10 parts of the body)

ॐ नमो भगवते रुद्राय।

ॐ - मूर्ध्ने नमः। नं - नासिकायै नमः। मों - ललाटाय नमः।

भं - मुखाय नमः। गं - कण्ठाय नमः। वं - हृदयाय नमः ।

तें - दक्षिणहस्ताय नमः । रुं - वामहस्ताय नमः। द्रां - नाभ्यै नमः।

यं - पादाभ्यां नमः ।।

## १३. (३)पंचाङ्गन्यासः

*(According to scholars, reciting Mantras repeatedly, 'mantra sannithyam' and 'devatha sannithyam' is derived. Repetition of such practice is called "Nyasa Jadilam". Weaving the plait with complicated knots, all mantras should be interwoven and in the process, GOD's power should be invoked in us - this is called "Nyasa Jadilam".)*

सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः । भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः।। ***पादाभ्यां नमः*** ।। (feet) 3.1

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।

*ऊरू मध्याभ्यां नमः* ।। (middle thigh) 3.2

अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।

*हृदयाय नमः* ।।(heart) 3.3

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।। *मुखाय नमः*।। (face) 3.4

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।। *मूर्ध्ने नमः* ।। (forehead) 3.5

## १४. (४) हंसगायत्री

अस्य श्री हंसगायत्री स्तोत्र महामन्त्रस्य । अव्यक्त परब्रह्म ऋषिः। अव्यक्त गायत्री छन्दः परमहंसो देवता ।। हं सां बीजं - हं सीं शक्तिः - हं सूं - कीलकम् ।। परमहंस - प्रसाद सिद्ध्यर्थे जपे विनियोगः ।।

**हंसां** - अङ्गुष्ठाभ्यां नमः। **हंसीं** - तर्जनीभ्यां नमः।

**हंसूं** - मध्यमाभ्यां नमः। **हंसैं** - अनामिकाभ्यां नमः।

**हंसौं** - कनिष्ठिकाभ्यां नमः। **हंसः** - करतल-करपृष्ठाभ्यां नमः।

**हंसां** - हृदयाय नमः । **हंसीं** - शिरसे स्वाहा।

**हंसूं** - शिखायै वषट्। **हंसैं** - कवचाय हुं।

**हंसौं** - नेत्रत्रयाय वौषट् । **हंसः** - अस्त्राय फट् ।।

भूर्भुवःसुवरोम् *इति दिग्बन्धः ।। ध्यानम् ।।*

गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरापहारम् ।
पश्यामि ते सर्व जनान्तरस्थं नमामि हंसं परमात्मरूपम् ।। (4.1)

देहो देवालयः प्रोक्तो जीवो देवःसनातनः। त्यजेदज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत्।। (4.2)

**हंसो हंस परमहंसः हंस सोऽहं सोऽहं हंसः ।। (recite gayathri 5 times silently)**

***(हंसगायत्री) हंसहंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् ।। (4.3)***

हंस हंसेति यो ब्रूयात् हंसो नाम सदाशिवः। एवं न्यासविधिं कृत्वा ततः सम्पुटमारभेत्।। (4.4)

## १५. (५) दिक्सम्पुट न्यास :

*Performing Nyasam in all 10 directions (eight directions+space+earth) and invoking prayers to Devthas, sitting place should be protected (like sambudam).*

ॐ भूर्भुवःसुवरों।

ॐ लं - त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । हुवे नु शक्रं पुरुहूतं इन्द्रꣳ स्वस्तिनो मघवा धात्विन्द्रः ।।

ॐ लं - *पूर्वदिग्भागे* इन्द्राय वज्रहस्ताय देवाधिपतये ऐरावतवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः ।

ॐ लं इन्द्राय नमः । *पूर्वदिग्भागे ललाटस्थाने* इन्द्रः सुप्रीतो सुप्रसन्नो वरदो भवतु ।। (5.1)

ॐ भूर्भुवःसुवरों

ॐ रं - त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ।।

ॐ रं - *आग्नेयदिग्भागे* अग्नये शक्तिहस्ताय तेजोऽधिपतयेऽजवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः ।

रं अग्नये नमः । *आग्नेयदिग्भागे नेत्रस्थाने* अग्निः सुप्रीतो सुप्रसन्नो वरदो भवतु ।। (5.2)

ॐ भूर्भुवःसुवरों

ॐ हं - सुगन्नः पन्थामभयं कृणोतु । यस्मिन्नक्षत्रे यम एति राजा । यस्मिन्नेनमभ्यषिञ्चन्त देवाः। तदस्य चित्रꣳ हविषा यजाम।।

ॐ हं - *दक्षिणदिग्भागे* यमाय दण्डहस्ताय धर्माधिपतये महिषवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः।

ॐ हं यमाय नमः। *दक्षिणदिग्भागे कर्णस्थाने* यमः सुप्रीतो सुप्रसन्नो वरदो भवतु।। (5.3)

ॐ भूर्भुवःसुवरों

ॐ षं - असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यान्तस्करस्यान्वेषि । अन्यमस्मदिच्छ सा त इत्या नमो देवि निरृते तुभ्यमस्तु ।।

ॐ षं *नैरृतदिग्भागे* निरृतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः ।

ॐ षं निरृतये नमः।*नैरृतदिग्भागे मुखस्थाने* निरृतिःसुप्रीतो सुप्रसन्नो वरदो भवतु।। (5.4)

ॐ भूर्भुवःसुवरों

ॐ वं - तत्त्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहबोध्युरुशं स मा न आयुः प्रमोषीः ।

ॐ वं - *पश्चिमदिग्भागे* वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः ।

ॐ वं वरुणाय नमः *पश्चिमदिग्भागे बाहुस्थाने* वरुणः सुप्रीतो सुप्रसन्नो वरदो भवतु।। (5.5)

ओं भूर्भुवस्सुवरों

ॐ यं - आनो नियुद्भिश्शतिनीभिरध्वरम् । सहस्त्रिणीभि रुपयाहि यज्ञम्। वायो अस्मिन् हविषि मादयस्व । यूयं पातस्वस्तिभिस्सदा नः ।।

ॐ यं - *वायव्य दिग्भागे* वायवे सांङकुशध्वजहस्ताय प्राणाधिपतये मृगवाहनाय सांगाय सायुधाय सशक्तये स परिवाराय सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः ।

ॐ यं वायवे नमः । *वायव्य दिग्भागे* नासिकास्थाने वायुःसुप्रीतो सुप्रसन्नो वरदो भवतु।। (5.6)

ओं भूर्भुवस्सुवरों

ॐ सं - वयं सोम व्रते तव । मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहि ।।

ॐ सं - *उत्तरदिग्भागे* सोमाय अमृतकलशहस्ताय नक्षत्राधिपतये अश्ववाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वर पार्षदाय नमः।

ॐ सं सोमाय नमः। *उत्तरदिग्भागे* हृदयस्थाने सोमः सुप्रीतो सुप्रसन्नो वरदो भवतु।। (5.7)

ओं भूर्भुवस्सुवरों

ॐ शं - तमीशानं जगतस्तस्थुषस्पतिम् । धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायु रदब्धस्स्वस्तये ।

ॐ शं - *ईशानदिग्भागे* ईशानाय त्रिशूलहस्ताय भूताधिपतये वृषभवाहनाय सांगाय सायुधाय सशक्तये स परिवाराय सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः ।

ॐ शं ईशानाय नमः *ईशानदिग्भागे नाभिस्थाने* ईशानः सुप्रीतो रुप्रसन्नो वरदो भवतु।। (5.8)

ॐ भूर्भुवःसुवरोम्

ॐ खं - अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरं हूतौ सजोषाः । यश्शंसतेस्तुवते धायि पज्रइन्द्रज्येष्ठा अस्मां अवन्तु देवाः ।

ॐ खं - *ऊर्ध्वदिग्भागे* ब्रह्मणे पद्महस्ताय प्रजाधिपतये हंसवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः ।

ॐ खं ब्रह्मणे नमः। *ऊर्ध्वदिग्भागे मूर्धस्थाने* ब्रह्मा सुप्रीतो सुप्रसन्नो वरदो भवतु।।(5.9)

ॐ भूर्भुवस्सुवरों

ॐ ह्रीं - स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छानश्शर्म सप्रथाः।

ॐ ह्रीं - *अधोदिग्भागे* विष्णवे चक्रहस्ताय लोकाधिपतये गरुडवाहनाय साङ्गाय सायुधाय सशक्तये स परिवाराय सर्वालङ्कारभूषिताय उमामहेश्वरपार्षदाय नमः ।

ॐ ह्रीं विष्णवे नमः । *अधोदिग्भागे पादस्थाने* विष्णुःसुप्रीतो सुप्रसन्नो वरदो भवतु ।। (5.10)

## १६. (६) ।। षोडशाङ्ग - रौद्रीकरणम् ।।

*[Keeping away the defeat from other Jeevan, this portion offer prayers from top skin to inside bones, which removes all sins, all 16 chapters in the body is performed with Rowdreekaranam. Powerful Sri Rudra Jyothi's guidance is sought here to fade away the evils/problems.]*

विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.1)

वह्निरसि हव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.2)

श्वात्रोऽसि प्रचेताः रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.3)

तुथोऽसि विश्ववेदा रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.4)

उशिगसिकवी रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.5)

अङ्गारिरसि बंभारी रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.6)

अवस्युरसि दुवस्वान् रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.7)

शुन्ध्यूरसि मार्जालीयो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.8)

संभ्राडसि कृशानू रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.9)

परिषद्योऽसि पवमानो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसीः।। (6.10)

प्रतक्वासि नभस्वान् रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.11)

असंमृष्टोऽसि हव्यसूदो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी :।। (6.12)

ऋतधामासि सुवर्ज्योती रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी :।। (6.13)

ब्रह्मज्योतिरसि सुवर्धामा रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी :।। (6.14)

अजोऽस्येकपाद् रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा माहिंसी : ।। (6.15)

अहिरसि बुध्नियो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा माहिंसी : ।। (6.16)

त्वगस्थिगतैः सर्वपापैः प्रमुच्यते । सर्वभूतेष्वपराजितो भवति । ततो भूतप्रेत पिशाच- ब्रह्मराक्षस यक्षयमदूतशाकिनी डाकिनी सर्पश्वापद वृश्चिक तस्करा-ज्वरा द्युपद्रव जोपघाताः। सर्वे ज्वलन्तं पश्यन्तु मां रक्षन्तु।। यजमानं सहकुटुम्बं रक्षन्तु।। सर्वान् महान् रक्षन्तु ।।

## १७. (७) ।। गुह्यादि - मस्तकान्तं षडङ्गन्यास : ।।

*[Performing six body Nyasam with best selected Veda Mantras.]*

मनो ज्योतिर्जुषता माज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वेदेवा इह मादयन्ताम् ।। *गुह्याय नमः* ।। (private parts) (7.1)

अबोद्ध्यग्निःसमिधा जनानां प्रति धेनुमिवायती मुषासम् । यह्वा इव प्रवयामुज्जिहानाः प्रभानवःसिस्रते नाकमच्छ ।। *नाभ्यै नमः* ।। (navel) (7.2)

अग्निमूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳरेताꣳसि जिन्वति ।। *हृदयाय नमः* ।। (heart) (7.3)

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविꣳ सम्राज मतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ।। *कण्ठाय नमः* ।। (neck) (7.4)

मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वा मनुमदन्तु देवाः ।। *मुखाय नमः* (face) (7.5)

जातवेदा यदि वा पावकोऽसि । वैश्वानरो यदि वा वैद्युतोऽसि । शम्प्रजाभ्यो यजमानाय लोकम् ।। ऊर्जं पुष्टिं दददभ्यावंवृत्स्व ।। *शिरसे नमः* ।। (forehead) (7.6)

## १८. (८) ।। आत्मरक्षा ।।

*(The Following mantras are recited to reach-near Parabrahmam by performing Nyasam)*

ब्रह्मात्मन्वदसृजत । तदकामयत । समात्मना पद्येयेति । आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै दशमꣳ हूतः प्रत्यशृणोत्। स दशहूतोऽभवत्। दशहूतो हवै नामैषः। तं वा एतं दशहूतꣳ सन्तम्। दशहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।। (8.1)

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै सप्तमꣳहूतः प्रत्यशृणोत्। स सप्तहूतोऽभवत्। सप्तहूतोहवै नामैषः। तं वा एतं सप्तहूतꣳसन्तम्। सप्तहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।। (8.2)

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै षष्ठꣳ हूतः प्रत्यशृणोत्। स षड्ढूतोऽभवत्। षड्ढूतो ह्वै नामैषः। तं वा एतꣳ षड्ढूतꣳ सन्तम्। षड्ढोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।। (8.3)

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै पञ्चमꣳ हूतः प्रत्यशृणोत्। स पञ्चहूतोऽभवत्। पञ्चहूतो ह्वै नामैषः। तं वा एतं पञ्चहूतꣳ सन्तम्। पञ्चहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।। (8.4)

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै चतुर्थꣳ हूतः प्रत्यशृणोत्। स चतुर्हूतोऽभवत्। चतुर्हूतो ह्वै नामैषः। तं वा एतं चतुर्हूतꣳ सन्तम्। चतुर्होतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।। (8.5)

तमब्रवीत्। त्वं वै मे नेदिष्ठꣳ हूतः प्रत्यश्रौषीः। त्वयै नानाख्यातार इति। तस्मान्नुहैनाꣳश्चतुर्होतार इत्याचक्षते। तस्माच्छुश्रूषुः पुत्राणाꣳ हृद्यतमः। नेदिष्ठो हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। य एवं वेद।। (8.6)

आत्मने नमः।।

## १९. (९) ।। शिवसङ्कल्पः ।।

*[Beginning of Mahanyasam - we started with "Athatha Panjanga RudrAnAm nyAsa pUrva....". This mantra refers to to the following five elements of Shivasangkalpam (Heart), Purusha Sooktha Parayanam (Forehead), Uththara NarAyana ParAyanam (Tuft) Apratiratham (shield), tvamagne (weapon) - all these are Veda mantras and considered important]*

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् । येन यज्ञस्त्रायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.7)

येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारुयन्ति । यत्सम्मितं मनः संचरन्ति तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.2)

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यत्क्षमन्तं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.3)

यत्प्रज्ञानं मुत चेतो धृतिश्च यज्ज्योति रन्तरमृतं प्रजासु । यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.4)

सुषारथिरश्वानि वयं मनुष्यान्मे नियुते पशुभिर्वाजिनीवान् । हृत्प्रविष्टं यदचरं यविष्ठं तन्मे मनःशिवसङ्कल्पमस्तु ।। (8.5)

यस्मिन्नृचसामायजूꣳषि यस्मिन्प्रतिष्ठा रशनाभाविभाराः। यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.6)

यदत्र षष्ठं त्रिशतꣳ सुवीर्यं यज्ञस्य गुह्यं नवनावमाय्यम् । दश पञ्च त्रिꣳशतं यत्परं तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.7)

यज्जाग्रतो दूरमुदैतु सर्वं तत्सुप्तस्य तथैवेति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.8)

येनेदं विश्वं जगतो बभूव ये देवाविमहतो जातवेदाः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमास्तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.9)

येन द्यौः पृथिवी चान्तरिक्षं च ये पर्वताः प्रदिशो दिशश्च । येनेदं जगद्व्याप्तं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.10)

ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मिः । ते श्रोत्रे चक्षुषी सञ्चरन्तं तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.11)

अचिन्त्यं चा प्रमेयं च व्यक्ताव्यक्त परं च यत् । सूक्ष्मात् सूक्ष्मतरं ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.12)

एका च दश शतं च सहस्रं चायुतं च । नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्च तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.13)

ये पञ्च पञ्चादश शतꣳ सहस्रमयुतन्न्यर्बुदं च । ये अग्निचित्तेष्टकास्ताꣳ शरीरं तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.14)

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । यस्य योनिं परिपश्यन्ति धीरास्तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.15)

यस्यैतं धीराः पुनन्ति कवयो ब्रह्माणमेतं त्वा वृणुतमिन्दुम् । स्थावरं जङ्गमं द्यौराकाशं तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.16)

परात्परतरं ब्रह्म तत्परात्परतो हरिः । यत्परात्परतोऽधीशं तन्मे मनः शिवसङ्कल्पमस्तु।।(8.17)

परात्परतरं चैव तत्पराच्चैव यत्परम्। यत्परात्परतो ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु।। (8.18)

या वेदादिषु गायत्री सर्वव्यापी महेश्वरी। ऋग्यजुःसामाथर्वैश्च तन्मे मनः शिवसङ्कल्पमस्तु।। (8.19)

यो वै देवं महादेवं प्रयतः प्रणतः शुचिः यःसर्वे सर्ववेदैश्च तन्मे मनः शिवसङ्कल्पमस्तु।। (8.20)

प्रयतः प्रणवोङ्कारं प्रणवं पुरुषोत्तमम् । ओङ्कारं प्रणवात्मानं तन्मे मनः शिवसङ्कल्पमस्तु।। (8.21)

योऽसौ सर्वेषु वेदेषु पठ्यते ह्ययमीश्वरः । अकायो निर्गुणो ह्यात्मा तन्मे मनः शिवसङ्कल्पमस्तु।। (8.22)

गोभिर्जुष्टं धनेन ह्यायुषा च बलेन च । प्रजया पशुभिः पुष्कराक्षं तन्मे मनः शिवसङ्कल्पमस्तु।। (8.23)

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.24)

कैलासशिखरे रम्ये शङ्करस्य शिवालये । देवतास्तत्र मोदन्ति तन्मे मनः शिवसङ्कल्पमस्तु।। (8.25)

कैलास शिखरा वासं हिमवद्गिरिसंस्थितम् । नीलकण्ठं त्रिणेत्रं च तन्मे मनः शिवसङ्कल्पमस्तु।। (8.26)

विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यान्नमति सम्पतत्रैर्द्यावापृथिवी जनयन् देव एकस्तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.27)

चतुरो वेदानधीयीत सर्वशास्त्रमयं विदुः । इतिहासपुराणानि तन्मे मनः शिवसङ्कल्पमस्तु।। (8.28)

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नोऽवधीः पितरं मोत मातरं प्रिया मानस्तनुवो रुद्र रीरिषस्तन्मे मनः शिवसङ्कल्पमस्तु ।। (8.29)

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.30)

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिन्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमस्तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.31)

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमꣳ हृदे । सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.32)

ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतःसुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठाःसतश्च योनिमसतश्च विवस्तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.33)

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.34)

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.35)

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.36)

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीꣳ सर्व भूतानां तामिहोपह्वये श्रियम् तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.37)

नमकं चमकं चैव पुरुषसूक्तं च यद्विदुः । महादेवं च तत्तुल्यं तन्मे मनः शिवसङ्कल्पमस्तु।।(8.38)

य इदꣳ शिवसङ्कल्पꣳ सदा ध्यायन्ति ब्राह्मणाः । ते परं मोक्षं गमिष्यन्ति तन्मे मनः शिवसङ्कल्पमस्तु ।।(8.39)

## २०. (१०) हृदयाय नमः । (पुरुषसूक्त पारायणम्)

*(**Purusha Suktam** comprises of 3 portions. It is recited in step-by-step seqence in temples. First portion is called "**purushasuktam**", the second being "**Uththaranarayanam**" and the third "**MahanarAyanam**" [**narayanasuktam**]. **UththaranarAyanam** is recited only in South India. For Mahanysam - only two portion is used and MahanarAyanam is not in practice.)*

ॐ सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्। पुरुष एवेदꣳ सर्वम्। यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानः। यदन्नेनातिरोहति। एतावानस्य महिमा। अतो ज्यायाꣳश्च पूरुषः ।।१।।

पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि। त्रिपादूर्ध्व उदैत्पुरुषः। पादोऽस्येहाभवात्पुनः। ततो विष्वङ्व्यक्रामत्। साशनानशने अभि। तस्माद्विराडजायत। विराजो अधि पूरुषः। स जातो अत्यरिच्यत। पश्चाद्भूमिमथो पुरः ।।२।।

यत्पुरुषेण हविषा। देवा यज्ञमतन्वत। वसन्तो अस्यासीदाज्यम्। ग्रीष्म इध्मःशरद्धविः। सप्तास्यासन्परिधयः। त्रिःसप्त समिधः कृताः। देवा यद्यज्ञं तन्वानाः। अबध्नन् पुरुषं पशुम्। तं यज्ञं बर्हिषि प्रौक्षन्। पुरुषं जातमग्रतः ।।३।।

तेन देवा अयजन्त। साध्या ऋषयश्च ये। तस्माद्यज्ञात्सर्वहुतः। संभृतं पृषदाज्यम् । पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान् ग्राम्याश्च ये। तस्माद्यज्ञात्सर्वहुतः। ऋचः सामानि जज्ञिरे। छन्दाꣳसिजज्ञिरे तस्मात्। यजुस्तस्मादजायत ।। ४।।

तस्मादश्वा अजायन्त। ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्। तस्माज्जाता अजावयः। यत्पुरुषं व्यदधुः। कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू। कावूरू पादावुच्येते। ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः ।। ५।।

ऊरू तदस्य यद्वैश्यः। पद्भ्याꣳ शूद्रो अजायत। चन्द्रमा मनसो जातः। चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च। प्राणाद्वायुरजायत। नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्। तथा लोकाꣳ अकल्पयन् ।।६।।

वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तुपारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन् यदास्ते। धाता पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान्प्रदिशश्चतस्रः। तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते। यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्ते। यत्र पूर्वे साध्याः सन्ति देवाः ।।७।।

ॐ नमो नारायणाय। **ॐ नमो भगवते रुद्राय। ।। पुरुषसूक्तं शिरसे स्वाहा।।**

**।। पुरुषसूक्तं शिरसे स्वाहा।।**

अद्भ्यः संभृतः पृथिव्यै रसाच्च। विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्रे। वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय। प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते ।।८।।

तस्य धीराः परिजानन्ति योनिम्। मरीचीनां पदमिच्छन्ति वेधसः। यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये। रुचं ब्राह्मं जनयन्तः। देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा असन्वशे ।।९।।

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तम्। इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण ।।१०।।

**ॐ नमो भगवते रुद्राय । उत्तरनारायणꣳ शिखायै वषट् ।।**

## २१. (११) अप्रतिरथम् (कवचम्)

आशुश्शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एक वीरश्शतꣳ सेना अजयत्साकमिन्द्रः । संक्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयततत्सहध्वं युधो नर इषुहस्तेन वृष्णा । स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा सयुध इन्द्रो गणेन । सꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता । बृहस्पते परिदीया रथेन रक्षोहामित्राꣳ अप बाधमानः । प्रभञ्जन्सेनाःप्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम् । गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रम्मृणन्तमोजसा । इमꣳसजाता अनुवीरयध्वमिन्द्रꣳ सखायोऽनु सꣳरभध्वम्। बलविज्ञायःस्थविरः प्रवीरःसहस्वान् वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्। अभिगोत्राणि सहसा गाहमानोऽदायो वीरश्शतमन्युरिन्द्रः ।

दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्रयुत्सु । इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे । इन्द्रस्य वृष्णो वरुणस्यराज्ञ आदित्यानां मरुताꣳ शर्द्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयता मुदस्थात् । अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकं या इषवस्ता जयन्तु ।

अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु । उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां महांꣳसि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः । उपप्रेत जयता नरःस्थिरावःसन्तु बाहवः । इन्द्रो वः शर्म यच्छत्वनाधृष्या यथासथ । अवसृष्टा परापतशरव्ये ब्रह्म सꣳशिता । गच्छामित्रान् प्रविश मैषां कञ्चनोच्छिषः । मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजामृतेनाभिवस्ताम् । उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः । यत्र बाणाःस्म्पतन्ति कुमारा विशिखा इव । इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु ।।

**ॐ नमो भगवते रुद्राय ।। आशुश्शिशानोऽप्रतिरथं कवचाय हुम्।।**

## २२. (१२) ।। प्रतिपूरुषमित्यनुवाकः (नेत्रं)।।

प्रतिपूरुष मेककपालान्निर्वपत्येकमतिरिक्तं यावन्तोगृह्याःसमस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छैक एव रुद्रो न द्वीतीयाय तस्थ आखुस्ते रुद्र पुशुस्तं जुषस्वैष ते रुद्रभागः सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथासति। सुगं मेषाय मेष्या अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् । यथा नः श्रेयसः करद्यथा नो वस्य सः करद्यथानः पशुमतः करद्यथा नो व्यवसाययात् । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । एषते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्यवतत धन्वा पिनाकहस्तः कृत्तिवासाः ।।

प्रतिपूरुषमेककपालान्निर्वपति । जाता एवःप्रजा रुद्रान्निरवदयते । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते । एककपाला भवन्ति । एकधैव रुद्रं निरवदयते । नाभिघारयति । यदभिघारयेत् । अन्तरवचारिणꣳ रुद्रं कुर्यात् । एकोल्मुकेन यन्ति । (१) तद्धि रुद्रस्य भागधेयम्। इमां दिशंयन्ति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते । रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत। असौ ते पशुरिति निर्दिशेद्यं द्विष्यात् । यमेव द्वेष्टि । तमस्मै पशुं निर्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् ।

(२) न ग्राम्यान् पशून् हिनस्ति । नारण्यान् । चतुष्पथे जुहोति । एष वा अग्नीनां पड्बीशो नाम । अग्निवत्येव जुहोति । मध्यमेन पर्णेन जुहोति । स्रुग्घ्येषा । अथो खलु। अन्तमेनैव होतव्यम् । अन्तत एव रुद्र निरवदयते । (३) एष ते रुद्र भागः सहस्वस्राम्बिकयेत्याह । शरद्वा अस्याम्बिका स्वसा। तया वा एष हिनस्ति । यꣳ हिनस्ति । तयैवैनꣳ सह शमयति। भेषजङ्गव इत्याह । यावन्त एव ग्राम्याःपशवः। तेभ्यो भेषजङ्करोति। अवाम्ब रुद्रमदिमहीत्याह । आशिषमेवैतामाशास्ते । (४) त्र्यम्बकं यजामह इत्याह । मृत्योर्मुक्षीय मामृतादिति वा वै तदाह। उत्किरन्ति । भगस्य लीप्सन्ते। मूते कृत्वा सजन्ति । यथा जनं यतेऽवसङ्करोति । तादृगेव

तत् । एष ते रुद्र भाग इत्याह निरवत्त्यै । अप्रतीक्षमायन्ति । अपः परिषिञ्चति। रुद्रस्यान्तर्हित्यै । प्रवा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति। आदित्यं चरुं पुनरेत्य निर्वपति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति ।।

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ।।

**ॐ नमो भगवते रुद्राय । प्रतिपूरुषं प्रतिपूरुषं विभ्राडिति नेत्रत्रयाय वौषट् ।।**

## २३. (१३) त्वमग्ने रुद्रोऽनुवाकः (शतरुद्रीयम्)

(The entire Sri Rudram is called "*Shatharudreeyam*" - beginning from "*Tvamagne*", it is generally recited along with Mahanyasam and these portions have been taken from Vedas.)

त्वमग्ने रुद्रो असुरो महो दिवः। त्वꣳ शर्द्धो मारुतं पृक्ष ईशिषे। त्वꣳ वातैररुणैर्यासि शङ्गयः। त्वं पूषा विधतः पासि नुत्मना। देवा देवेषु श्रयद्ध्वम्। प्रथमा द्वितीयेषु श्रयद्ध्वम्। द्वितीयास्तृतीयेषु श्रयद्ध्वम्। तृतीयाश्चतुर्थेषु श्रयद्ध्वम्। चतुर्थाः पञ्चमेषु श्रयद्ध्वम्। पञ्चमाः षष्ठेषु श्रयद्ध्वम्। (१) षष्ठाः सप्तमेषु श्रयद्ध्वम्। सप्तमा अष्टमेषु श्रयद्ध्वम्। अष्टमा नवमेषु श्रयद्ध्वम्। नवमा दशमेषु श्रयद्ध्वम्। दशमा एकादशेषु श्रयद्ध्वम्। एकादशा द्वादशेषु श्रयद्ध्वम्। द्वादशास्त्रयोदशेषु श्रयद्ध्वम्। त्रयोदशाश्चतुर्दशेषु श्रयद्ध्वम्। चतुर्दशाः पञ्चदशेषु श्रयद्ध्वम्। पञ्चदशाः षोडशेषु श्रयद्ध्वम् (२) षोडशाः सप्तदशेषु श्रयद्ध्वम्। सप्तदशा अष्टादशेषु श्रयद्ध्वम्। अष्टादशा एकोन्नविꣳशेषु श्रयद्ध्वम्। एकान्नविꣳशा विꣳशेषु श्रयद्ध्वम्। विꣳशा एकविꣳशेषु श्रयद्ध्वम्। एकविꣳशा द्वाविꣳशेषु श्रयद्ध्वम्। द्वाविꣳशास्त्रयो विꣳशेषु श्रयद्ध्वम्। त्र्योविꣳशाश्चतुर्विꣳशेषु श्रयद्ध्वम्। चतुर्विꣳशाः पञ्चविꣳशेषु श्रयद्ध्वम्। पचविꣳशाष्षड्विꣳशेषु श्रयद्ध्वम्। (३) षडविꣳशाःसप्तविꣳशेषु श्रयद्ध्वम्। सप्तविꣳशा अष्टाविꣳशेषु श्रयद्ध्वम्। अष्टाविꣳशा एकोन्नत्रिꣳशेषु श्रयद्ध्वम्। एकोन्नत्रिꣳशास्त्रिꣳशेषु श्रयद्ध्वम्। त्रिꣳशा एकत्रिꣳशेषु श्रयद्ध्वम्। एकत्रिꣳशा द्वात्रिꣳशेषु श्रयद्ध्वम्। द्वात्रिꣳशास्त्रयस्त्रिꣳशेषु श्रयद्ध्वम्। देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशाः उत्तरे भवत। उत्तर वर्त्मान उत्तर सत्वानः। यत्काम इदं जुहोमि। तन्मे समृद्ध्यतां। वयꣳस्याम पतयो रयीणाम्। भूर्भवस्वःस्वाहा।।

**ॐ नमो भगवते रुद्राय । त्वमग्ने त्वमग्ने शतरुद्रीयमित्यस्त्राय फट् ।।**

## २४.(१४) पञ्चाङ्क जपं

सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः । भवे भवे नातिभवे भवस्वमाम् । भवोद्भवाय नमः ।।

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।

अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।।

## २५. अष्टाङ्ग प्रणामं (नमस्कारः)

(Each part of the body namely heart, head, view through eyes, speech, hands, ears - all 8 portions should be invoked with Shiva roopa and prayed 8 times. Prostrate when "*UmamaheshvarabhyAm*" is recited.)

१) हिरण्यगर्भःसमवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।। **उरसा नमः** ।। उमामहेश्वराभ्यां नमः ।।

२) यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ।। **शिरसा नमः**।। उमामहेश्वराभ्यां नमः ।।

३) ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतःसुरुचो वेन आवः सबुध्नियां उपमा अस्य विष्ठाःसतस्श्च योनिमसतश्च विवः ।। **दृष्ट्या नमः** । उमामहेश्वराभ्यां नमः ।।

४) मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतान्नोभरीमभिः ।। **मनसा नमः** ।। उमामहेश्वराभ्यां नमः ।।

५) उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्। स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून् ।। **वचसा नमः** ।। उमामहेश्वराभ्यां नमः ।।

६) अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ।। **पद्भ्यां नमः** ।। उमामहेश्वराभ्यां नमः ।।

७) या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहा ।। **कराभ्यां नमः** ।। उमामहेश्वराभ्यां नमः ।।

८) इमं यमप्रस्तरमाहि सीदाङ्गिरोभिः पितृभिः संविदानः । आत्वा मन्त्राः कविशस्तावहन्त्वेना राजन् हविषा मादयस्व ।। **कर्णाभ्यां नमः** ।। उमामहेश्वराभ्यां नमः ।।

**उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टांग उच्यते।।**

## २६.।। लघुन्यासः ।।

[*Laghunyasam* asserts here and forewarns you to meditate God Shiva and think as if you are His Swaroopam.]

ॐ अथात्मानꣳ शिवात्मानꣳ श्रीरुद्ररुपं ध्यायेत्।।

[Pray God Shiva, sit in front of Him and be prepared to begin Sri Rudra, DhyAna, Archana, Abhishekam]

शुद्धस्फटिकसंकाशं त्रिनेत्रं पञ्चवक्त्रकम्। गङ्गाधरं दशभुजं सर्वाभरणभूषितम्।।
नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम्। व्याघ्रचर्मोत्तरीयं च वरेण्यमभय प्रदम् ।।
कमण्डल्वक्षसूत्राणां धारिणं शूलपाणिनम्। ज्वलन्तं पिङ्गलजटा-शिखामुद्योतधारिणम् ।।
वृषस्कन्ध-समारुढं उमादेहार्ध-धारिणम् । अमृतेनाप्लुतं शान्तं दिव्यभोग-समन्वितम्।।
दिग्देवतासमायुक्तं सुरासुरनमसकृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम्।।
सर्वव्यापिन-मीशानं रुद्रं वै विश्वरुपिणम् । एवं ध्यात्वा द्विजस्सम्यक् ततो यजनमारभेत्।।

**अताथ्मनि देवता स्थापयेत्** ||

[When performing Nyasam by touching the related organ, respective meditating *Devthas* should be invoked]

प्रजनने ब्रह्मा तिष्ठतु। पादयोर्विष्णुस्तिष्ठतु। हस्तयोर्हरस्तिष्ठतु।
बाह्वोरिन्द्रस्तिष्ठतु । जठरेऽग्निस्तिष्ठतु । हृदये शिवस्थिष्ठतु ।
कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु। नासिकयोर्वायुस्तिष्ठतु ।
नयनयोश्चन्द्रादित्यौ तिष्ठेताम्। कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु ।
मूर्ध्न्यादित्यास्तिष्ठन्तु । शिरसि महादेवस्तिष्ठतु । शिखायां वामदेवस्तिष्ठतु ।
पृष्ठे पिनाकी तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवाशङ्करौ तिष्ठेताम्
सर्वतो वायुस्तिष्ठतु ।

**ततो बहिःसर्वतोऽग्निर्ज्वालामाला-परिवृतास्तिष्ठन्तु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु ।**

मां रक्षन्तु (or) ।। सर्वान् महाजनान् रक्षन्तु ।। सर्वजनान् लोकान् कुठुम्बस्थं रक्षन्तु ।।

अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
वायुर्मे प्राणे श्रितः। प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
चन्द्रमा मे मनसि श्रितः । मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
दिशो मे श्रोत्रे श्रिताः । श्रोत्रꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
आपो मे रेतसि श्रिताः । रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
पृथिवी मे शरीरे श्रिता । शरीरꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
ओषधिवनस्पतयो मे लोमसु श्रिताः । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
इन्द्रो मे बले श्रितः । बलꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये। हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ।
ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि। अहममृते । अमृतं ब्रह्मणि ।
आत्मा म आत्मनि श्रितः । आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि।
पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात्।[ring bell]
वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः ।।

**एवं यथालिङ्गमङ्गानी संमृज्या देवमात्मानं च प्रत्या राधयेत्** ।।

आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभि : ।
आराधयामि भक्त्या **त्वाम् मानुगृहाण महेश्वर** ।।

हरहर नमः पार्वती पतये - हरहर महादेव ।। [stop ringing bell]

## २७. ध्यान श्लोकं

ध्यायेन्निरामयं वस्तु सर्गस्थिति-लयादिकम् ।
निर्गुणं निष्कलं नित्यं मनोवाचामगोचरम् ।।

गङ्गाधरं शशिधरं जटामकुटशोभितम् ।
श्वेतभूति-त्रिपुण्ड्रेण विराजित ललाटकम् ।।

लोचनत्रय-संपन्नं स्वर्णकुण्डल-शोभितम् ।
स्मेराननं चतुर्बाहुं मुक्ताहारोपशोभितम् ।।

अक्षमालां सुधाकुंभं चिन्मयीं मुद्रिकामपि ।
पुस्तकं च भुजै-र्दिव्यै-र्दधानं पार्वतीपतिम् ।।

श्वेताम्बरधरं श्वेतं रत्नसिंहासन-स्थितम् ।
सर्वाभीष्ट-प्रदातारं वटमूल-निवासिनम् ।।

जपाकुसुम-साहस्र-समान-श्रिय-मीश्वरीम् ।
सुवर्ण-रत्नखचित-मकुटेन विराजिताम् ।।

ललाटपट्टसंराजत्-संलग्न - तिलकाञ्चिताम् ।
राजीवायत-नेत्रान्तां नीलोत्पलदलेक्षणाम् ।।

सन्तप्त-हेमखचित-ताटङ्काभरणान्विताम् ।
ताम्बूल-चर्वण-रत-रक्तजिह्वा-विराजिताम् ।।

पताकाभरणोपेतां मुक्ताहारोपशोभिताम् ।
स्वर्णकङ्कण-संयुक्तै-चतुर्भि-र्बाहुभि-र्युताम् ।।

सुवर्णरत्नखचित-काञ्चीदाम-विराजिताम् ।
कदलीललितस्तम्भ-सन्निभोरु-युगान्विताम्।।

श्रिया विराजितपदां भक्तत्राण-परायणाम् ।
अन्योन्याश्लिष्टहृद्बाहु-गौरीशङ्कर-संज्ञकम् ।।

सनातनं परं ब्रह्म परमात्मान-मव्ययम् ।
आवाहयामि जगता-मीश्वरं परमेश्वरम् ।। [ring bell]

आत्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः।
वाताजितै-र्बलवद्भि-र्मनोजवै-रायाहि शीघ्रं मम हव्याय शर्वोम्।।
*ईशानमावाहयामीत्यावाह्य ।।*

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।
गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।।

## २८. ध्यानावाहन विधिः

१) ॐ गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम्।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिस्सीद सादनम् ।।
ॐ भूर्भुवःसुवरोम्। अस्मिन् बिम्बे महागणपतिं ध्यायामि आवाहयामि ।।

२) ॐ तत्पुरुषाय विद्महे चकतुण्डाय धीमही । तन्नो नन्दिः प्रचोदयात्।।
ॐ भूर्भुवःसुवरोम् अस्मिन् बिम्बे नन्दीश्वरं ध्यायामि आवाहयामि ।।

३) ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।
गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।।
ॐ भूर्भुवःसुवरोम् अस्मिन् लिङ्गे सोमास्कन्द स्वरूप परमेश्वरं ध्यायामि। आवाहयामि।

४) आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च।
हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन्।
ॐ भूर्भुवःसुवरोम्। अस्मिन् स्फटिकबिम्बे छायासंज्ञासमेत श्रीसूर्यनारायणं ध्यायामि।
आवाहयामि।

५) सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। सभूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्।
ॐ भूर्भुवःसुवरोम्। अस्मिन् साळग्रामचक्रे श्रीभूमी समेत श्रीमहाविष्णुं ध्यायामि।
आवाहयामि।।

६) जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुंदुरितात्यग्निः ।
प्रणो देवी सरस्वती वाजेभिरू वाजिनीवती । धीनाम वित्रयवतु। महासरस्वत्यै नमः।
हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीम् लक्ष्मीं जातवेदो म आवह।
तां म आवह जातवेदो लक्ष्मीमनपगामिनीं। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहं।
ॐ भूर्भुवःसुवरोम्। अस्मिन् बिम्बे दुर्गा-सरस्वती-लक्ष्मीं ध्यायामि। आवाहयामि ।।

७) निघ्रुष्वैरसमायुतैः। कालैर्हरित्वमापन्नैः। इन्द्रायाहि सहस्रयुक्।
अग्निर्विभ्राष्टिवसनः। वायुश्श्वेतसिकद्रुकः। संवत्सरो विषूवर्णैः।
नित्यास्तेऽनुचरास्तव। सुब्रह्मण्योꣳ सुब्रह्मण्योꣳ सुब्रह्मण्योम्।
ॐ भूर्भुवःसुवरोम्। अस्मिन् बिम्बे सुब्रह्मण्यस्वामिनं ध्यायामि। आवाहयामि।

८) धाताविधातापरमोतसंदृक्-प्रजापतिःपरमेष्ठीविराजा।
स्तोमाश्छंदाꣳसिनिविदोम आहुरेतस्मैराष्ट्रमभिसन्नमाम।
अभ्यावर्तद्वमुपमेतसाकमयꣳ शास्ताधिपतिर्वो अस्तु।
अस्य विज्ञानमनुसꣳ रभध्वमिमंपश्चादनुजीवाथसर्वे।
ॐ भूर्भुवःसुवरोम्। अस्मिन् बिम्बे हरिहरपुत्र स्वामिन् ध्यायामि। आवाहयामि।।

९) अन्नपूर्णे सदापूर्णे शङ्कर प्राणवल्लभे । ज्ञान वैराग्य सिद्ध्यर्थं भिक्षां देहि च पार्वती।
मातां मे पार्वती देवी पिता देवो महेश्वरः । बान्धवाः शिव भक्ताश्च स्वदेशो भुवनत्रयं।।
ॐ भूर्भुवःसुवरोम्। अस्मिन् बिम्बे अन्नपूर्णेश्वरिं ध्यायामि। आवाहयामि।।
[stop ringing bell]

## २९ सद्यो जाताय पंजकलशेषु पूजा

१) सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व माम्। भवोद्भवाय नमः। ओं भूर्भुवःसुवरोम्। अस्मिन् पश्चिमकलशे सद्योजातं ध्यायामि। आवाहयामि।।

१) वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः। ओं भूर्भुवःसुवरोम् अस्मिन् उत्तरकलशे वामदेवं ध्यायामि। आवाहयामि।।

३) अघोरेभ्योऽथघोरेभ्यो घोर घोरतरेभ्यः। सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।। ओं भूर्भुवःसुवरोम् अस्मिन् दक्षिणकलशे अघोरं ध्यायामि आवाहयामि ।

४) तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।। ओं भूर्भुवःसुवरोम् अस्मिन् पूर्वकलशे तत्पुरुषं ध्यायामि। आवाहयामि।।

५) ईशानः सर्वविद्यानामीश्वरःसर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।। ओं भूर्भुवःसुवरोम् अस्मिन् मध्यमकलशे ईशानं ध्यायमि । आवाहयामि।।

अत्रागच्छ।

| | | | |
|---|---|---|---|
| आवाहितो भव। | स्थापितो भव। | सन्निहितो भव। | सन्निरुद्धो भव। |
| अवकुण्ठितो भव। | सुप्रीतो भव। | सुप्रसन्नो भव। | वरदो भव। |
| सर्वाभीष्टप्रदो भव। | स्वागतमस्तु । | प्रसीद प्रसीद ।। | |

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम्।
तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधिं कुरु।।

## ३०. उपचारमन्त्रं

१) ॐ सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा ।अत्यतिष्ठद्दशाङ्गुलम्।

ॐ नमस्ते रुद्र मन्यवं उतोत इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुतते नमः।

ॐ ह्रीं नमःशिवाय। सद्योजातं प्रपद्यामि।

ॐ भूर्भुवःसुवरोम्। अस्मिन् प्रतिमायां महादेवं ध्यायामि, आवाहयामि।

शिवं ध्यायामि आवाहयामि। रुद्रं ध्यायामि आवाहयामि। शङ्करं ध्यायमि आवाहयामि। नीललोहितं ध्यायामि आवाहयामि। ईशानं ध्यायामि आवाहयामि। विजयं ध्यायामि आवाहयामि। भीमं ध्यायामि आवाहयामि। देवदेवं ध्यायामि आवाहयामि। भवोद्भवं ध्यायामि आवाहयामि। आदित्यात्मक श्री रुद्रं ध्यायामि आवाहयामि।

२) पुरुष एवेदꣳ सर्वम्। यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानः। यदन्नेनातिरोहति।

यात इषुः शिवतमा शिवं बभूवं ते धनुः। शिवा शरव्यां या तव तया नो रुद्र मृडय।

ॐ ह्रीं नमःशिवाय । सद्यो जाताय वै नमो नमः । रत्न सिंहासनं समर्पयामि।

३) एतावानस्य महिमा। अतो ज्यायाग्श्च पूरुषः।। पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि।
या ते रुद्र शिवा तनूरघोरापापकाशिनी। तया नस्तनुवाशन्तमया गिरिशन्ताभिचाकशीः ।

ॐ ह्रीं नमःशिवाय । भवे भवे नातिभवे भवस्वमां । पादयोः पाद्यं समर्पयामि ।

४) त्रिपादूर्ध्व उदैत्पुरुषः। पादोऽस्येहाभवात्पुनः। ततो विष्वङ् व्यक्रामत्। साशनानशने अभि।

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्।

ॐ ह्रीं नमःशिवाय । भवोद्भवाय नमः । अर्घ्यं समर्पयामि ।

५) तस्माद्विराडजायत। विराजो अधि पूरुषः। स जातो अत्यरिच्यत। पश्चाद्भूमिमथो पुरः।।

शिवेन वचसा त्वा गिरिशाच्छावदानसि। यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्।।

ॐ ह्रीं नमःशिवाय । वामदेवाय नमः। आचमनीयं समर्पयामि ।

६) यत्पुरुषेण हविषा। देवा यज्ञमतन्वत। वसन्तो अस्यासीदाज्यम्। ग्रीष्म इध्मः शरद्धविः।

अध्यवोचदधि वक्ता प्रथमो दैव्यो भिषक्। अहीꣳश्च सर्वान् जम्भयन्त्सर्वाश्च यातुधान्यः ।।

ॐ ह्रीं नमःशिवाय । ज्येष्ठाय नमः । मधुपर्कं समर्प्यामि ।

७) सप्तास्यासन् परिधयः। त्रिःसप्त समिधः कृताः। देवा यद्यज्ञं तन्वानाः। अबध्नन् पुरुषं पशुम्।

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः।

ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे।।

ॐ ह्रीं नमःशिवाय । श्रेष्ठाय नमः ।। स्नानं समर्पयामि । स्नानानन्तरं आचमनीयं

समर्पयामि।।

८) तं यज्ञं बर्हिषि प्रौक्षन्। पुरुषं जातमग्रतः।। तेन देवा अयजन्त। साध्या ऋषयश्च ये।

असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः।

उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ।।

ॐ ह्रीं नमःशिवाय । रुद्राय नमः । वस्त्रोत्तरीयं समर्पयामि ।

९) तस्माद्यज्ञात्सर्वहुतः। सम्भृतं पृषदाज्यम् । पशूꣳस्ताꣳश्चक्रे वायव्यान् ।आरण्यान् ग्राम्याश्च ये।

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्त्वानोऽहं तेभ्योऽकरन्नमः।।

ॐ ह्रीं नमःशिवाय। कालाय नमः। यज्ञोपवीताभरणार्थे अक्षतान् समर्पयामि।।

१०)तस्माद्यज्ञात्सर्वहुतः। ऋचः सामानि जज्ञिरे। छन्दाꣳसिजज्ञिरे तस्मात्। यजुस्तस्मादजायत।।

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप।।

ॐ ह्रीं नमःशिवाय। कलविकरणाय नमः। दिव्य परिमळगन्धान् धारयामि।

गन्धस्योपरि हरिद्रा कुङ्कुमं समर्पयामि।

११)तस्मादश्वा अजायन्त। ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्। तस्माज्जाता अजावयः।

अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव।।

ॐ ह्रीं नमःशिवाय। बलविकरणाय नमः। पुष्पमालां समर्पयामि। पुष्पैः पूजयामि।

## १. गणपति पूजा ।। *(दूर्वा युग्मं to be used)*

ॐ सुमुखाय नमः । ॐ एकदन्ताय नमः। ॐ कपिलाय नमः। ॐ गजकर्णकाय नमः।

ॐ लम्बोदराय नमः। ॐ विकटाय नमः। ॐ विघ्नराजाय नमः। ॐ विनायकाय नमः।

ॐ धूमकेतवे नमः । ॐ गणाध्यक्षाय नमः। ॐ फालचन्द्राय नमः।

ॐ गजाननाय नमः। ॐ वक्रतुण्डाय नमः। ॐ शूर्पकर्णाय नमः। ॐ हेरम्बाय नमः।

ॐ स्कन्दपूर्वजाय नमः। ॐ सिद्धिविनायकाय नमः।

ॐ महागणपतये नमः नानाविध परिमळपत्रपुष्पाणि समर्पयामि।।

## २. श्री नन्दिकेश्वर षोडशोपचार पूजा। *(दूर्वा युग्मं to be used)*

ॐ नन्दिकेशाय नमः। ॐ ब्रह्मरूपिणे नमः। ॐ वृषभाय नमः।

ॐ शिवप्रियाय नमः। ॐ नठनाय नमः। ॐ चितचामरधारिणे नमः।

ॐ मत शृङ्गिने नमः। ॐ नवरत्न प्रियाय नमः। ॐ करुणाकराय नमः।

ॐ सोम सूर्याग्निलोचनाय नमः। ॐ श्वेतचामर भूषणाय नमः।

ॐ तिलतण्डुलभक्षणाय नमः। ॐ शिलादन सुनन्दनाय नमः।

ॐ वीर घण्टाधराय नमः ।।

## ३. शिव पूजा - *(बिल्व दलं to be used)*

ॐ भवाय देवाय नमः। ॐ शर्वाय देवाय नमः। ॐ ईशानाय देवाय नमः ।

ॐ पशुपतये देवाय नमः। ॐ रुद्राय देवाय नमः। ॐ उग्राय देवाय नमः ।

ॐ भीमाय देवाय नमः। ॐ महते देवाय नमः ।

## ४. अम्बिका पूजा

*(अरळि पुष्पं or any red color flower to be used)*

ॐ भवस्य देवस्य पत्न्यै नमः । ॐ शर्वस्य देवस्य पत्न्यै नमः ।

ॐ ईशानस्य देवस्य पत्न्यै नमः । ॐ पशुपतेर्देवस्य पत्न्यै नमः ।

ॐ रुद्रस्य देवस्य पत्न्यै नमः । ॐ उग्रस्य देवस्य पत्न्यै नमः ।

ॐ भीमस्य देवस्य पत्न्यै नमः । ॐ महतो देवस्य पत्न्यै नमः ।

## ५. साम्बपरमेश्वर पूजा *( mixed flower be used)*

| | | |
|---|---|---|
| ॐ भवान्यै नमः | भवाय नमः | पादौ पूजयामि |
| ॐ जगन्मात्रे नमः | जगत्पित्रे नमः | जङ्घे पूजयामि । |
| ॐ मृडान्यै नम : | मृडाय नमः | जानुनी पूजयामि । |
| ॐ रुद्राण्यै नम : | रुद्राय नमः | ऊरू पूजयामि । |
| ॐ काळ्यै नमः | कलान्तकाय नमः | कटिं पूजयामि । |
| ॐ नगेन्द्रकन्यकायै नमः | नागेन्द्राभरणाय नमः | नाभिं पूजयामि । |
| ॐ स्तवप्रियायै नमः | स्तव्याय नमः | स्तनौ पूजयामि । |
| ॐ भवन्यै नमः | भवनाशनाय नमः | भुजद्वयं पूजयामि । |
| ॐ कम्बुग्रीवायै नमः | कालकन्ठाय नमः | कण्ठं पूजयामि । |
| ॐ मायायै नमः | महेश्वराय नमः | मुखमण्डलं पूजयामि । |
| ॐ ललितायै नमः | लास्यप्रियाय नमः | ललाटान्तं पूजयामि । |
| ॐ शिवायै नमः | शिवाय नमः | शिरः पूजयामि । |
| ॐ प्रणतार्तिहरायै नमः | प्रणतार्तिहराय नमः | पुनः पादौ पूजयामि। |
| ॐ सर्वेश्वर्यै नमः | सर्वेश्वराय नमः | सर्वाण्यङ्गानि पूजयामि । |

## ६. लिङ्ग पूजा

*(Add **लिङ्गाय नमः** at the end of each name) जवन्ति पुष्पं to be used*

(Left to right sequence)

| | | |
|---|---|---|
| **ॐ लिङ्गमूर्तये नमः।** | **ॐ शिवलिङ्गाय नमः।** | **ॐ अद्भुत लिङ्गाय।** |
| ॐ अनुगत। | ॐ अव्यक्त। | ॐ अर्थ। |
| ॐ अच्युत। | ॐ अनन्त। | ॐ अमृत। |
| ॐ अनेक। | ॐ अनेकस्वरूप। | ॐ अनादि। |
| ॐ आदि। | ॐ आनन्द। | ॐ आत्मानन्द। |
| ॐ आर्जितपापनाश। | ॐ आश्रितरक्षक। | ॐ इन्दु। |
| ॐ इन्द्रिय। | ॐ इन्द्रादिप्रिय। | ॐ ईश्वर। |
| ॐ ऊर्जित। | ॐ ऋग्वेद श्रुति। | ॐ एक। |
| ॐ ऐश्वर्य। | ॐ ओङ्कार। | ॐ ह्रीङ्कार। |

ॐ कनक। ॐ वेद। ॐ परम।
ॐ व्योम। ॐ सहस्र। ॐ वह्नि।
ॐ पुराण। ॐ श्रुति। ॐ पाताल।
ॐ ब्रह्म। ॐ रहस्य। ॐ सप्तद्वीपोद्भव।
ॐ नाग। ॐ तेजो। ॐ ऊर्ध्व।
ॐ अथर्व। ॐ साम। ॐ यज्ञाङ्ग।
ॐ यज्ञ। ॐ तत्व। ॐ देव।
ॐ विग्रह। ॐ राव। ॐ भजो।
ॐ सत्व। ॐ स्वर्ण। ॐ स्फटिक।
ॐ भव। ॐ निस्त्रैगुण्य। ॐ मन्त्र।
ॐ पुरुष। ॐ सर्वात्म। ॐ सर्वलोकाङ्ग।
ॐ बुद्धि। ॐ अहङ्कार। ॐ भूत।
ॐ महेश्वर। ॐ सुन्दर। ॐ असुरेश्वर।
ॐ सुरेश्वर। ॐ महेश। ॐ शङ्कर।
ॐ दानवनाश। ॐ रवचन्द्र। ॐ रूप।
ॐ प्रपञ्च। ॐ विलक्षण। ॐ तापनिवारण।
ॐ स्वरूप। ॐ सर्व। ॐ प्रिय।
ॐ राम। ॐ मूर्ति। ॐ महेशस्वरूप।
ॐ वेदान्त। ॐ विश्वेश्वर। ॐ योगि।
ॐ हृदय। ॐ चिन्मय । ॐ चिद्धन।
ॐ ज्योतिर्। ॐ लङ्कापुर। ॐ ललित।
ॐ चिदम्बर। ॐ नारदसेवित। ॐ कमल।
ॐ कैलास। ॐ करुणारस। ॐ शान्त।
ॐ गिरि। ॐ वल्लभ। ॐ शङ्कर।
ॐ सर्वजनपूजित। ॐ सर्वपातकनाशन। ॐ गौरी।
ॐ वेदस्वरूप। ॐ सकलजनप्रिय। ॐ सकलजगद्रक्षक।
ॐ इष्टकाम्यार्थबलसिद्धि। ॐ शोभित। ॐ मङ्गळ।।

## ७. श्री सूर्य षोडशोपचारपूजा *(अरळि पुष्पं/red color flower to be used)*

ॐ मित्रायै नमः। ॐ रवये नमः। ॐ सूर्यायै नमः। ॐ भानवे नमः।

ॐ खगाय नमः। ॐ पूष्णे नमः। ॐ हिरण्यगर्भाय नमः। ॐ मरीचये नमः।

ॐ आदित्याय नम। ॐ सवित्रे नमः। ॐ अर्काय नमः। ॐ भास्कराय नमः।

ॐ श्री छायासंज्ञासमेत श्री सूर्यन्नारायणस्वामिने नमः ।।

## ८. श्री विष्णु षोडशोपचारपूजा *(तुलसी दलं to be used)*

ॐ अच्युताय नमः। ॐ अनन्ताय नमः। ॐ गोविन्दाय नमः।

ॐ केशवाय नमः । ॐ नारायणाय नमः। ॐ माधवाय नमः।

ॐ गोविन्दाय नमः। ॐ विष्णवे नम :। ॐ मधुसूदनाय नमः।

ॐ त्रिविक्रमाय नमः। ॐ वामनाय नमः। ॐ श्रीधराय नमः ।

ॐ हृषीकेशाय नमः। ॐ पद्मनाभाय नमः। ॐ दामोदराय नमः ।

ॐ सङ्कर्षणाय :। ॐ वासुदेवाय नमः। ॐ प्रद्युम्नाय नमः ।

ॐ अनिरुद्धाय नमः। ॐ पुरुषोत्तमाय नमः। ॐ अधोक्षजाय नमः।

ॐ नरसिंहाय नमः। ॐ अच्युताय नमः। ॐ जनार्दनाय नमः ।

ॐ उपेन्द्राय नमः। ॐ हरये नमः। ॐ श्रीकृष्णाय नमः।।

श्री भूमिनीळासमेत श्री महाविष्णवे नमः।।

सीता लक्ष्मण भरतशत्रुघ्न हनूमत्समेत श्रीरामचन्द्र स्वामिने नमः।।

## ९. श्री दुर्गा षोडशोपचारपूजा *(Any red flower to be used)*

ॐ दुर्गायै नमः। ॐ भद्रकाळ्यै नमः।ॐ विजयायै नमः। ॐ वैष्णव्यै नमः ।

ॐ कुमुदायै नमः। ॐ चण्डिकायै नमः।ॐ कृष्णायै नमः। ॐ माधव्यै नमः ।

ॐ कन्यकायै नमः।ॐ मायायै नमः। ॐ नारायण्यै नमः।ॐ ईशान्यै नमः ।

ॐ शारदायै नमः। ॐ अम्बिकायै नमः।ॐ श्री दुर्गादेव्यै नमः।।

## १०. श्री लक्ष्मी षोडशोपचारपूजा *(Any red flower to be used)*

ॐ धनलक्ष्म्यै नमः। ॐ धान्यलक्ष्म्यै नमः।ॐ गजलक्ष्म्यै नमः।

ॐ गृहलक्ष्म्यै नमः। ॐ सन्तानलक्ष्म्यै नमः। ॐ वीर्यलक्ष्म्यै नमः।

ॐ विजयलक्ष्म्यै नमः। ॐ सौभाग्यलक्ष्म्यै नमः। ॐ महालक्ष्म्यै नमः।

## ११. श्री सरस्वती षोडशोपचारपूजा *(Any white flower can be used)*

ॐ सरस्वत्यै नमः। ॐ पुस्तकभृतायै नमः। ॐ ज्ञानमुद्रायै नमः।

ॐ वाग्देव्यै नमः। ॐ ब्रह्मज्ञानैकसाधनायै नमः। ॐ विद्यारूपायै नमः।

ॐ चित्रमाल्यविभूषितायै नमः। ॐ वारिजासनायै नमः। ॐ चतुर्वर्गफलप्रदायैनमः।

## १२. श्री सुब्रह्मण्य षोडशोपचार पूजा

ॐ स्कन्दाय नमः। ॐ गुहाय नमः। ॐ षण्मुखाय नमः।

ॐ कार्तिकेयाय नमः । ॐ मयूरवाहनाय नमः। ॐ शिवकुमाराय नमः।

ॐ काङ्केयाय नमः । ॐ कुक्कुटध्वजाय नमः। ॐ शक्तिधराय नमः।

ॐ तारकासुरसंहारिणे नमः ॐ देवसेनाधिपतये नमः। ॐ वल्लीरमणाय नमः।

ॐ श्री सुब्रह्मण्याय नमः ।

## १३. शास्ता - हरिहरपुत्र पूजा

ॐ भवस्य देवस्य सुताय नमः । ॐ शर्वस्य देवस्य सुताय नमः ।

ॐ ईशानस्य देवस्य सुताय नमः । ॐ पशुपतेः देवस्य सुताय नमः।

ॐ रुद्रस्य देवस्य सुताय नमः । ॐ उग्रस्य देवस्य सुताय नमः ।

ॐ भीमस्य देवस्य सुताय नमः । ॐ महतो देवस्य सुताय नमः ।

## १४. आञ्जनेय पूजा विधिः

ॐ श्री आञ्जनेयाय नमः ।

ॐ ब्रह्मचारिणे नमः ।

ॐ शुभकराय नमः ।

ॐ अक्षापहाय नमः ।

ॐ कपिवराय नमः ।

ॐ लङ्काद्वीपभयङ्कराय नमः।

ॐ सुग्रीवसम्मानिताय नमः ।

ॐ काकुत्स्थदूताय नमः ।

ॐ श्री आञ्जनेयाय नमः ।।

ॐ वायुपुत्राय नमः ।

ॐ सर्वारिष्टनिवारकाय नमः ।

ॐ पिङ्गलाक्षाय नमः ।

ॐ सीतान्वेषणतत्पराय नमः ।

ॐ कोटीन्दुसूर्यप्रभाय नमः ।

ॐ सकलताय नमः।

ॐ देवेन्द्रादि समस्तदेव विनुताय नमः ।

ॐ हनुमते नमः ।

१२) यत्पुरुषं व्यदधुः। कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू। कावूरूपादावुच्येते।
विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः।।
ॐ ह्रीं नमःशिवाय । बलाय नमः ।। धूपं आघ्रापयामि ।।

१३) ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः।।
ऊरू तदस्य यद्वैश्यः। पद्भ्याँ शूद्रो अजायत।
याते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयास्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज।।
ॐ ह्रीं नमःशिवाय । बलप्रमथनाय नमः । दीपं दर्शयामि ।।
धूपदीपानन्तरम् आचमनीयं समर्पयामि ।।

१४) ओं भूर्भुवःसुवः............ ब्रह्मणे स्वाहा ।
चन्द्रमा मनसो जातः। चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च। प्राणाद्वायुरजायत।
नमस्ते अस्त्वायुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने।।
ॐ ह्रीं नमःशिवाय । सर्वभूतदमनाय नमः ।। कदळी फलं महानैवेद्यं निवेदयामि।।

मध्ये मध्ये अमृतपानीयं समर्पयामि । अमृतापिधानमसि ।।

हस्तप्रक्षालणं समर्पयामि। पादप्रक्षालणं समर्पयामि । पुनराचमनीयं समर्पयामि।

१५) नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौः समवर्तत।

पद्भ्यां भूमिर्दिशः श्रोत्रात्। तथा लोकाँ अकल्पयन्।।

परिते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मिन्निधेहितम्।।

ॐ ह्रीं नमःशिवाय । मनोन्मनाय नमः । कर्पूरताम्बूलं निवेदयामि ।।

१६) वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तुपारे।

सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन् यदास्ते।

नमस्ते अस्तु भगवन् विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः।

ॐ ह्रीं नमःशिवाय। कर्पूरनीराजनं दर्शयामि। रक्ष रक्षान्धारयामि।

१७) धाता पुरस्ताद्यमुधाजहार। शक्रः प्रविद्वान्प्रदिशश्चतस्रः।

तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।

ॐ ह्रीं नमःशिवाय। वेदोक्त मन्त्रपुष्पं समर्पयामि।

१८) यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्।

ते ह नाकं महिमानः सचन्ते। यत्र पूर्वे साध्याः सन्ति देवाः।।

ॐ ह्रीं नमःशिवाय। प्रदक्षिण नमस्कारान् समर्पयामि ।।

## ३१. निर्माल्य मन्त्रं

आशास्तेऽयं यौ यजमानोऽसौ। आयुराशास्ते। सुप्रजास्त्वमाशास्ते।
सजातवनस्यामाशास्ते। उत्तरान् देवयुज्यामाशास्ते। भूयो हविष्करणमाशास्ते।
दिव्यं धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन हविषाशास्ते।
तदश्यात्तदृध्यात्। तदस्मै देवारासन्ताम्। तदग्निर्देवो देवेभ्यो वनते।
वयमग्नेर्मानुषाः इष्टं च वीतं च।
उभे च नो द्यावापृथिवी अꣳहसस्पाताम्। इहगतिर्वामस्येदं च। नमो देवेभ्यः।
उत्तरतः चण्डीश्वराय नमः। निर्माल्यं विसृज्य।।

## ३२. शिवमानसपूजा

आराधयामि मणिसन्निभ आत्मलिङ्गं
मायापुरीहृदयपङ्कज सन्निविष्टम्।
श्रद्धानदीविमलचित्त जलाभिषेकैः
नित्यं समाधिकुसुमै रपुनर्भवाय ।।

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम्।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितम गृह्यताम्।।१।।

सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम्।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु।।२।।

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो।।३।।

[Do different '*angabhyaasam*' by touching each place on the body as shown below]

अग्निहोत्रात्मने हृदयाय नमः । (Heart) दर्शपूर्णमासात्मने शिरसे स्वाहा । (Forehead)

चातुर्मास्यात्मने शिखायै वषट् । (Tuft) निरूढपशुबन्धात्मने कवचाय हुं । (**)

(** Keep your hands crossed to touch opposite shoulders)

ज्योतिष्टोमात्मने नेत्रत्रयाय वौषट् ।(Eyes)

सर्वक्रत्वात्मने अस्त्राय फट्। (Clap with right hand index and middle finger on the palm)

भूर्भुवस्सुवरोमिति दिग्बन्धः।।

**(Tap from right to left around your head with middle finger and thumb to erect a shield)**

## ध्यानम्

आपाताळ-नभःस्थलान्त-भुवन-ब्रह्माण्ड-माविस्फुर-

ज्ज्योतिःस्फाटिक-लिङ्ग-मौळि-विलसत्पूर्णेन्दु-वान्तामृतैः।

अस्तोकाप्लुत-मेक-मीश-मनिशं रुद्रानुवाकाञ्जपन्

ध्याये-दीप्सित-सिद्धये ध्रुवपदं विप्रोऽभिषिञ्चे-च्छिवम्।।

ब्रह्माण्डव्याप्तदेहा भसितहिमरुचा भासमाना भुजङ्गैः

कण्ठे कालाः कपर्दाकलित-शशिकला-श्चण्डकोदण्डहस्ताः।

त्र्यक्षा रुद्राक्षमालाः प्रकटितविभवाः शाम्भवा मूर्तिभेदा

रुद्राःश्रीरुद्रसूक्त-प्रकटितविभवा नःप्रयच्छन्तु सौख्यम् ।।

**शुद्धस्फटिकसङ्काशं शुद्धविद्याप्रदायकम् ।**

**शुद्धं पूर्णं चिदानन्दं सदाशिवमहं भजे।।**

ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्।

ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिःसीद सादनम् ।।

## ।। शान्तिपाठः ।।

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ।। (३)

ॐ शान्तिः शान्तिः शान्तिः ।।

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं

पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।

सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो

यद्यत्कर्म करोमि तत्तदखिलं शम्बो तवाराधनम्।।४।।

करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसंवापराधम्।

विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो।।५।।

## ३३. नन्दिकेश अनुज्ञैः पूजा विधिः

नन्दीश्वर महाभाग शिवध्यानपरायण । उमाशङ्करसेवार्थम् अनुज्ञां दातुमर्हसि ।

नन्दिकेश नमस्तुभ्यं शान्तानन्द प्रधायकः । महादेवे च सेवार्थम् अनुज्ञां दातुमर्हसि ।।

वन्दे वृषभदेवाय चितवर्ण स्वरूपिणे। तीक्ष्णश्रृङ्गाय तुङ्गाय वेदपादाय नन्दिने ।।

**(Oh reverred Nandikesha, who is always intent on meditating on Lord Shiva, kindly permit me to serve [worship] Lord Shiva, and Goddess Parvathi).**

वेदान्त वेद्याखिल विश्वमूर्ते विभो विरूपाक्ष विशेषशून्य ।

विश्वेश्वराशेष गणेश वन्द्याः कवाटमुद्धाटय कालकाल ।।

*हस्तताडनं कृत्वा ।।* ***(Clap your hands two times in front of the Lord)***

## ३४. ।। श्री रुद्रप्रश्नः ।।

अस्य श्री रुद्राध्यायप्रश्नमहामन्त्रस्य, अघोर ऋषिः।

अनुष्टुप्छन्दः, सङ्कर्षणमूर्तिस्वरूपो योऽसावादित्यः परमपुरुषःस एष रुद्रो देवता ।

नमः शिवायेति बीजम् । शिवतरायेति शक्तिः । महादेवायेति कीलकम् । श्रीसाम्बसदाशिव-प्रसादसिद्ध्यर्थे जपे विनियोगः ।।

ओं अग्निहोत्रात्मने अङ्कुष्ठाभ्यां नमः।(Thumb*) दर्शपूर्णमासात्मने तर्जनीभ्यां नमः । (**Index)

चातुर्मास्यात्मने मध्यमाभ्यां नमः । **(Middle)** निरूढपशुबन्धात्मने अनामिकाभ्यां नमः।**(Ring)**

ज्योतिष्टोमात्मने कनिष्ठिकाभ्यां नमः।**(Small)** सर्वक्रत्वात्मने करतलकरपृष्ठाभ्यां नमः।। ***

**(* Here rub both the index fingers on the thumb at a time from bottom-to-top)**

**(** Here rub thumb on the index fingers at a time from bottom-to-top)**

**(*** Circle both the hands without touching each other)**

नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ।। (३)

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो रथपतिभ्यश्च वो नमो नमः सेनाभ्यःसेनानिभ्यश्च वो नमो नमःक्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमःकुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यःश्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः।। (४)

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमःसहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो हृस्वाय च वामनाय च नमो ब्रहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमःशीघ्रियाय च शीभ्याय च नम उर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च।। (५)

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमःसोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमःश्लोक्याय चाऽवसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च।। (६)

नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तु पाय च।। (७)

## ।। श्री रुद्रप्रश्नः ।।

### ।। ॐ नमो भगवते रुद्राय ।।

ॐ नमस्ते रुद्र मन्यव उतोत इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः । या त इषुः शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो रुद्र मृडय। या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तनुवा शन्तमया गिरिशंताभिचाकशीहि। यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्। शिवेन वचसा त्वा गिरिशाच्छावदामसि। यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्। अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः । असौयस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे। असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः।नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः। प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप। अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव। विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत। अनेशन्नस्येषव आभुरस्य निषंगथिः। या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज। नमस्ते अस्त्वायुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने। परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ।। (१) **शम्भवे नमः ।**

**नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय शंकराय श्रीमन्महादेवाय नमः ।।**

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवंतये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः। ( २ )

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमो नमः सृकाविभ्यो जिघाꣳसद्भ्यो मुष्णतां पतये नमो

[Ring bell] नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमःशङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमश्शंभवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ।। (८) [Stop ringing bell]

नम इरिण्याय च प्रपथ्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो हृदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आख्खिदते च प्रख्खिदते च नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ।। (९)

द्रापे अन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किंचनाममत् । या ते रुद्र शिवा तनूःशिवा विश्वाहभेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे । इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् । मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ । मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मानोऽवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते। आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः। स्तुहि श्रुतं गर्तसदं युवानं मृगन्न भीममुपहलुमुग्रम्। मृडा जरित्रे रुद्रस्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः। परिणो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मति रघायोः। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय । मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि । विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳ हेतयोन्यमस्मन्निवपन्तु ताः। सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि।। (१०)

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्। तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि । अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । नीलग्रीवाः शितिकण्ठाः शर्वा अधःक्षमाचराः । नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः। ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः। ये भूतानामधिपतयो विशिखासः कपर्दिनः। ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। ये पथां

पथिरक्षय ऐलबृदा यव्युधः। ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः। य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे। तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि। नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि।। (११)

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीय माऽमृतात् । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु। तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य। अयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभेषजोऽयꣳ शिवाभिमर्शनः । ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान्यज्ञस्य मायया सर्वानव यजामहे। मृत्यवे स्वाहा मृत्यवे स्वाहा। ॐ नमो भगवते रुद्राय विष्णवे मृत्योर्मे पाहि।।

प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाप्यायस्व।। नमो रुद्राय विष्णवे मृत्युर्मे पाहि। सदाशिवोम् ।।

ॐ शान्तिः शान्तिः शान्तिः ।।

## ३५. ।। चमकप्रश्न : ।।

ॐ अग्नाविष्णू सजोषसेमावर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् । वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे ।। (१)

*[एष वै विभुर्नाम यज्ञः/ सर्वꣳ ह वै तत्र विभुर्भवति / यत्रैतेन यज्ञेन यजन्ते (१)]*

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्चमेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे कुप्तं च मे कुप्तिश्च मे मतिश्च मे सुमतिश्च मे ।। (२)

*[एष वै प्रभुर्नाम यज्ञः/ सर्वꣳ ह वै तत्र प्रभुर्भवति / यत्रैतेन यज्ञेन यजन्ते (२)]*

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे

संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ।। (३)

*[एष वा ऊर्जस्वान्नाम यज्ञः/ सर्वं ह वै तत्रोर्जस्वद्भवति / यत्रैतेन यज्ञेन यजन्ते (३)]*

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाँश्च मे माषाँश्च मे तिलाँश्च मे मुद्गाश्च मे खल्वाँश्च मे गोधूमाँश्च मे मसुराँश्च मे प्रियंगवश्च मेऽणवश्च मे श्यामाकाँश्च मे नीवाराँश्च मे ।। (४)

*[एष वै पयस्वान्नाम यज्ञः / सर्वं ह वै तत्र पयस्वद्भवति / यत्रैतेन यज्ञेन यजन्ते (४)]*

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ।। (५)

*[एष वै विधृतो नाम यज्ञः / सर्वं ह वै तत्र विधृतं भवति / यत्रैतेन यज्ञेन यजन्ते(५)]*

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे।। (६)

*[एष वै व्यावृत्तो नाम यज्ञः / सर्वं हवै तत्र व्यावृतं भवति / यत्रैतेन यज्ञेन यजन्ते (६)]*

अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपांशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याँश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाँश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे।। (७)

*[एष वै प्रतिष्ठितो नाम यज्ञः/ सर्वं ह वै तत्र प्रतिष्ठितं भवति / यत्रैतेन यज्ञेन यजन्ते (७)]*

इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ।। (८)

*[एष वै तेजस्वी नाम यज्ञः/ सर्वः ह वै तत्र तेजस्वी भवति / यत्रैतेन यज्ञेन यजन्ते (८)]*

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम्।। (९)

*[एष वै ब्रह्मवर्चस्वी नाम यज्ञः/ आह वै तत्र ब्राह्मणो ब्रह्मवर्चस्वी जायते / यत्रैतेन यज्ञेन यजन्ते (९)]*

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवीच मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्योही च मे पष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वाञ्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ।। (१०)

*[एष वा अतिव्याधी नाम यज्ञः / आह वै तत्र राजन्योऽतिव्याधी जायते/ यत्रैतेन यज्ञेन यजन्ते (१०)]*

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविꣳशतिश्च मे त्रयोविगꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ।। (११)

*[एष वै दीर्घो नाम यज्ञः/ दीर्घायुषो ह वै तत्र मनुष्या भवन्ति / यत्रैतेन यज्ञेन यजन्ते(११)]*

ॐ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाःसूक्तवाचः पृथिविमातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳशुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ।।

*[एष वै क्लृप्तो नाम यज्ञः/ कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः / यत्रैतेन यज्ञेन यजन्ते(१२)]*

ॐ शान्तिः शान्तिः शन्तिः ।।

## ३६. देवता तर्पणम्

श्रेष्ठाय नमः । स्नानं समर्पयामि। स्नानानन्तरं आचमनीयं समर्पयामि ।

वस्त्र, उपवीत, यज्ञोपवीत, आभरणार्थे अक्षतान् समपर्यामि ।

दिव्यपरिमळ गन्धान् धारयामि । गन्धस्योऽपरि हरिद्रा कुङ्कुमम् समर्पयामि । पुष्पमालां समर्पयामि। पुष्पैः पूजयामि ।

ॐ भवाय देवाय नमः। ॐ शर्वाय देवाय नमः। ॐ ईशानाय देवाय नमः ।

ॐ पशुपतये देवाय नमः। ॐ रुद्राय देवाय नमः। ॐ उग्राय देवाय नमः ।

ॐ भीमाय देवाय नमः। ॐ महते देवाय नमः ।

ॐ भवस्य देवस्य पत्न्यै नमः । ॐ शर्वस्य देवस्य पत्न्यै नमः।

ॐ ईशानस्य देवस्य पत्न्यै नमः । ॐ पशुपतेर्देवस्य पत्न्यै नमः ।

ॐ रुद्रस्य देवस्य पत्न्यै नमः । ॐ उग्रस्य देवस्य पत्न्यै नमः।

ॐ भीमस्य देवस्य पत्न्यै नमः । ॐ महतो देवस्य पत्न्यै नमः ।

बलाय नमः । धूपं आघ्रापयामि । बलप्रमथनाय नमः । दीपं दर्शयामि । धूपदीपाऽनन्तरं आचमनीयं समर्पयामि। ॐ भूर्भूवःसुवः ।......

(१) नर्यप्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठताम्।

(२) अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे। अदब्धा योऽशीततनो। अविषं नः पितुं कृणु।

(३) शꣳस्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः। अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगाः।

(४) सप्रथसभां मे गोपाय । ये च सभ्यास्सभासदः । तानिन्द्रियावतःकुरु। सर्वमायुरुपासताम् ।
अ हे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रै विदा विदुः। ऋचस्सामानि यजूꣳषि । सा हि श्रीरमृता सताम् ।।

महागणपतये नमः सोमास्कन्दाय नमः । शान्ति दुर्गा परमेश्वर्यै नमः । आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः । समस्तोऽपचारार्थे कर्पूर नीराजनं दर्शयामि । रक्षान्धारयामि । अनेन रुद्र जपप्रयुक्त रुद्राभिषेकेन भगवान् सर्वात्मकः । सर्वं श्री आदित्यादि श्री रुद्र सुप्रीत सुप्रसन्नो वरदो भवतु । ॐ हर । ॐ हर । ॐ हर ।

भवम् देवं तर्पयामि शर्वं देवं तर्पयामि ईशानं देवं तर्पयामि
पशुपतिं देवं तर्पयामि रुद्रं देवं तर्पयामि उग्रं देवं तर्पयामि
भीमं देवं तर्पयामि महान्तं देवं तर्पयामि ।।

भवस्य देवस्य पत्नीं तर्पयामि शर्वस्य देवस्य पत्नीं तर्पयामि ईशानस्य देवस्य पत्नीं तर्पयामि
पशुपते देवस्य पत्नीं तर्पयामि रुद्रस्य देवस्य पत्नीं तर्पयामि उग्रस्य देवस्य पत्नीं तर्पयामि
भीमस्य देवस्य पत्नीं तर्पयामि महतोर्देवस्य पत्नीं तर्पयामि।।

--- अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।

--- तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।।

--- ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।।

ओं अग्निहोत्रात्मने अङ्गुष्ठाभ्यां नमः। दर्शपूर्णमासात्मने तर्जनीभ्यां नमः ।
चातुर्मास्यात्मने मध्यमाभ्यां नमः । निरूढपशुबन्धात्मने अनामिकाभ्यां नमः ।
ज्योतिष्टोमात्मने कनिष्ठिकाभ्यां नमः । सर्वक्रत्वात्मने करतलकरपृष्ठाभ्यां नमः।।
अग्निहोत्रात्मने हृदयाय नमः । दर्शपूर्णमासात्मने शिरसे स्वाहा ।
चातुर्मास्यात्मने शिखायै वषट् । निरूढशुबन्धात्मने कवचाय हुं ।
ज्योतिष्टोमात्मने नेत्रत्रयाय वौषट् । सर्वक्रत्वात्मने अस्त्राय फट्।
भूर्भुवस्सुवरोमिति दिग्विमोकः।।

**(tap your middle and thumb finger around your head from left to right - *to remove the sheild*)**

## ध्यानम्

आपाताळ-नभःस्थलान्त-भुवन-ब्रह्माण्ड-माविस्फुर-
ज्ज्योतिःस्फाटिक-लिङ्ग-मौळि-विलसत्पूर्णेन्दु-वान्तामृतैः।
अस्तोकाप्लुत-मेक-मीश-मनिशं रुद्रानुवाकाञ्जपन्
ध्याये-दीप्सित-सिद्धये ध्रुवपदं विप्रोऽभिषिञ्चे-च्छिवम्।।

ब्रह्माण्डव्याप्तदेहा भसितहिमरुचा भासमाना भुजङ्गैः
कण्ठे कालाः कपर्दाकलित-शशिकला-श्चण्डकोदण्डहस्ताः।
त्र्यक्षा रुद्राक्षमालाः प्रकटितविभवाः शाम्भवा मूर्तिभेदा
रुद्राःश्रीरुद्रसूक्त-प्रकटितविभवा नःप्रयच्छन्तु सौख्यम् ।।

**शुद्धस्फटिकसङ्काशं शुद्धविद्याप्रदायकम् ।**
**शुद्धं पूर्णं चिदानन्दं सदाशिवमहं भजे।।**

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ।।

ॐ शान्तिः शान्तिः शान्तिः ।।

## ३७. कुम्भाभिषेकम्

ॐ नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः।
नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि।। (Recite 3 times)
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ।

तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेह बोध्युरुशꣳ स मा न आयुः प्रमोषीः ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।
गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।।

ॐ भूर्भुवःसुवरोम्। अस्मात् कुम्भात् सोमास्कन्द स्वरूपस्य सखल थीर्थादिपतिम् वरुणं यथासुखं यथास्थानं प्रतिष्ठापयामि। शोभनार्थे क्षेमाय पुनरागमनाय च।

## अघमर्षणसूक्तम्

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः। यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः। यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम्। तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः। नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः।।

यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात्। अत्याशनादतीपानाद्यच्च उग्रात् प्रतिग्रहात्। तन्नो वरुणो राजापाणिनाह्यवमर्शतु। सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम्। यश्चाप्सु वरुणस्स पुनात्वघमर्षणः। इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमꣳ सचता परुष्णिया। असिक्नियां मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्यासुषोमया। ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्रिरजायत ततःसमुद्रो अर्णवः।।

समुद्रादर्णवा दधि संवथ्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। सूर्याचन्द्रमसौ धाता यथापूर्व-मकल्पयत्। दिवं च पृथिवीं चान्तरिक्ष-मथो सुवः। यत्पृथिव्याꣳ रजस्स्वमान्तरिक्षे विरोदसी। इमाꣳस्तदापो वरुणः पुनात्वघमर्षणः। पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः। एष भूतस्य मध्ये भुवनस्य गोप्ता। एष पुण्यकृतां लोकानेषमृत्योर्हिरण्मयम्। द्यावापृथिव्योर्हिरण्मयꣳ सꣳश्रितꣳ सुवः।।

सनःसुवःसꣳशिशाधि। आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा। अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः। वरुणोऽपामघमर्षणस्तस्मात् पापात्प्रमुच्यते। रजोभूमिस्त्वमाꣳ रोदयस्व प्रवदन्ति धीराः। आक्रान्थ्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा। वृषा पवित्रे अधिसानो अव्ये बृहथ्सोमो वावृधे सुवान इन्दुः।। ।।ॐ शान्तिः शान्तिः शान्तिः ।।

## ३८. नारायणसूक्तम्

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्। विश्वं नारायणं देवमक्षरं परमं पदम्। विश्वतः परमान्नित्यं विश्वं नारायणꣳहरिम्। विश्वमेवदं पुरुषस्तद्विश्वमुपजीवति। पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम्। नारायणं महाज्ञेयं विश्वात्मानं परायणम्। नारायणपरो ज्योतिरात्मा नारायणःपरः। नारायणपरं ब्रह्म तत्त्वं नारायणःपरः। नारायणपरो ध्याता ध्यानं नारायणःपरः। यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा।।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशम्भुवम्। पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम्। अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति। ज्वालमालाकुलं भाती विश्वस्यायतनं महत्। सन्ततꣳ शिलाभिस्तु लम्बत्याकोशसन्निभम्।

तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्। तस्य मध्ये महानग्नि-र्विश्वार्चि-र्विश्वतोमुखः। सोऽग्रभुग्विभजन्तिष्ठ-न्नाहारमजरः कविः। तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तता। सन्तापयति स्वं देहमापादतलमस्तकः। तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः। नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्।।

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः।।

ॐ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।।

**।। ॐ शान्तिः शान्तिः शान्तिः ।।**

## ३९. ।। विष्णुसूक्तम् ।।

ॐ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा।।

तदस्य प्रियमभिपाथो अश्याम्। नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था। विष्णोः पदे परमे मध्व उत्सः। प्रतद्विष्णुःस्तवते वीर्याय। मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेषु। अधिक्षियन्ति भुवनानि विश्वा। परो मात्रया तनुवा वृधान। न ते महित्वमन्वश्नुवन्ति।।

उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वम्। परमस्य विथ्से। विचक्रमे पृथिवीमेष एताम्। क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो अस्य कीरयो जनासः। उरुक्षितिं सुजनिमाचकार। त्रिर्देवः पृथिवीमेष एताम्। विचक्रमे शतर्चसं महित्वा। प्रविष्णुरस्तु तवसस्तवीयान्। त्वेषग्ह्यस्य स्थविरस्य नाम ।।

अतो देवा अवन्तुनो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्त धामभिः। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। ततो धर्माणि धारयन्। विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यःसखा।।

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसः सःसमिन्धते। विष्णोर्यत्परमं पदम्। पर्याप्त्या अनन्तरायाय सर्वस्तोमोऽति रात्र उत्तम महर्भवति सर्वस्याप्त्यै सर्वस्य जित्त्यै सर्वमेव तेनाप्नोति सर्वं जयति।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४०. ।। दुर्गासूक्तम् ।।

।ॐ। जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः।। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः।। अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः।। विश्वानि नो दुर्गहा जातवेदः सिन्धुन्न नावा दुरितातिपर्षि। अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्।। पृतना जितं सहमानमुग्रमग्निं हुवेम परमाथ्सधस्थात्। स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः।। प्रत्नोषिकमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि। स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व।। गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनुसञ्चरेम। नाकस्य पृष्ठमभि संवसानो वैष्णवीं लोक इह मादयन्ताम्।।

कात्यायनाय विद्महे कन्यकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयात् ।।

ॐ शान्तिः शान्तिः शान्तिः ।।

## ४१. ।। श्रीसूक्तम् ।।

ॐ।। हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह। तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्।। अश्वपूर्वां रथमध्यां हस्तिनाद प्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम्।। कां सोऽस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्।। चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे।। आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः।। उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे।। क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्।। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्। मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः।। कर्दमेन प्रजाभूता मयि संभव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्।। आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। निच देवीं मातरं श्रियं वासय मे कुले। आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह।।

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह। तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्।।

यः शुचिः प्रयतो भूत्वा जुहुयादाज्य मन्वहम्। श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत्। पद्मानने पद्म ऊरु पद्माक्षी पद्मसम्भवे। (तन्मे भजसि) त्वं मां भजस्व पद्माक्षी येन सौख्यं लभाम्यहम्।। अश्वदायी गोदायी धनदायी महाधने। धनं मे जुषतां देवि सर्वकामांश्च देहि मे।। पुत्रपौत्र धनं धान्यं हस्त्यश्वादिगवे रथम्। प्रजानां भवसि माता आयुष्मन्तं करोतु (मे) माम्।। धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः। धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्नु ते।। वैनतेय सोमं पिब सोमं पिबतु वृत्रहा। सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः।। न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत्।। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि।। पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि। विश्वप्रिये विष्णु मनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व।। या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी। गम्भीरा वर्तनाभिः स्तनभर नमिता शुभ्र वस्त्रोत्तरीया। लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः।

सरसिज निलये सरोजहस्ते धवलतरांशुक गन्धमाल्यशोभे। भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्।। विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्। लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युत वल्लभाम्।।

महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि। तन्नो लक्ष्मीः प्रचोदयात्।। श्री-वर्चस्व-मायुष्य-मारोग्यमाविधात् चोभामानं महीयते। धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं धीर्घमायुः।। ॐ महादेव्यै च विद्महे विष्णुपत्नी च धीमहि। तन्नो लक्ष्मीःप्रचोदयात् ।।

।। ॐ **शान्तिः शान्तिः शान्तिः** ।।

## ४२. ।। भूसूक्तम् ।।

।ॐ। भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे। आयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरं च प्रयन्त्सुवः। त्रिंशद्धाम विराजति वाक्पतङ्गाय शिश्रिये। प्रत्यस्य वह द्युभिः। अस्य प्राणादपानत्यन्तश्चरति रोचना। व्यख्यन् महिषः सुवः। यत्त्वा क्रुद्धः परोवपमन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि। यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्।

मेदिनी देवी वसुन्धरा स्याद्वसुधा देवी वासवी। ब्रह्मवर्चसः पितृणां श्रोत्रं चक्षुर्मनः। देवी हिरण्यगर्भिणी देवी प्रसूवरी। सदने सत्यायने सीद। समुद्रवती सावित्रीह नो देवी मह्यङ्गी। महीधरणी महोव्यथिष्ठाःश्शृङ्गे शृङ्गे यज्ञे यज्ञे विभीषिणी। इन्द्रपत्नी व्यापिनी सुरसरिदिह। वायुमती जलशयनी श्रियन्धाराजा सत्यन्धोपरिमेदिनी। श्वोपरिधत्तं परिगाय।

विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम्। लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम्।

ॐ धनुर्धरायै विद्महे सर्वसिद्ध्यै च धीमहि। तन्नो धरा प्रचोदयात्। महीं देवीं विष्णुपत्नीमजूर्याम्। प्रतीचीं मेनाꣳ हविषा यजामः। त्रेधा विष्णुरुरुगायो विचक्रमे। महीं दिवं पृथिवीमन्तरिक्षम्। तच्छ्रोणैतिश्रव इच्छमाना। पुण्यꣳश्लोकं यजमानाय कृण्वती।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४३. ।। नीळासूक्तम् ।।

ॐ नीळां देवीꣳ शरणमहं प्रपद्ये।। गृणाहि। घृतवती सवितराधिपत्यैः पयस्वतीरन्तिराशानो अस्तु। ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशानासहसोया मनोता। बृहस्पतिर्मातरिश्वोत वायुःसन्धुवानावाता अभि नो गृणन्तु। विष्टम्भो दिवोधरुणः पृथिव्या अस्येश्याना जगतो विष्णुपत्नी।। विष्णु पत्नीश्च विद्महे श्री भूसख्यै च धीमहि। तन्नो नीळाः प्रचोदयात्।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४४. ।। मेधासूक्तम् ।।

ॐ यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृताथ्सम्बभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देवधारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरिविश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

ॐ मेधादेवी जुषमाणा न आगा-द्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा नुदमाना दुरुक्तान् बृहद्वदेम विदथे सुवीराः। त्वया जुष्ट ऋषि-र्भवति देवि त्वया ब्रह्माऽऽगतश्री-रुत त्वया। त्वया जुष्ट-श्चित्रं विन्दते वसु सानो जुषस्व द्रविणो न मेधे।।

मेधां म इन्द्रो ददातु मेधां देवी सरस्वती। मेधां मे अश्विनावुभा-वाधत्तां पुष्करस्रजा। अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवीं मेधा सरस्वती सा मां मेधा सुरभि-र्जुषताꣳ स्वाहा।।

आमां मेधा सुरभि-र्विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम्।।

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु। मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु। मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु।। हंस हंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्।। ।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४५. ।। आयुष्यसूक्तम् ।।

यो ब्रह्मा ब्रह्मण उज्जहार प्राणैः शिरः कृत्तिवासाः पिनाकी ।
ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन।।

विभ्राजमानः सरिरस्य मध्या-द्रोचमानो घर्मरुचिर्य आगात्।
स मृत्युपाशानपनुद्य घोरानिहायुषेणो घृतमत्तु देवः।।

ब्रह्मज्योति-र्ब्रह्मपत्नीषु गर्भं यमादधात् पुरुरूपं जयन्तम्।
सुवर्णरंभग्रह-मर्कमर्च्यं तमायुषे वर्धयामो घृतेन।।

श्रियं लक्ष्मी-मौबला-मंबिकां गां षष्ठीं च यामिन्द्रसेनेत्युदाहुः।
तां विद्यां ब्रह्मयोनिँ सरूपामिहायुषे तर्पयामो घृतेन।।

दाक्षायण्यः सर्वयोन्यः स योन्यः सहस्रशो विश्वरूपा विरूपाः।
ससूनवः सपतयः सयूथ्या आयुषेणो घृतमिदं जुषन्ताम्।।

दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथ्नन्तु वीरान्।
तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाँ रीरिषो मोत वीरान्।।

एकः पुरस्तात् य इदं बभूव यतो बभूव भुवनस्य गोपाः।
यमप्येति भुवनँ सांपराये स नो हविर्घृत-मिहायुषेत्तु देवः।।

वसून् रुद्रा-नादित्यान् मरुतोऽथ साध्यान् ऋभून् यक्षान् गन्धर्वाँश्च पितृँश्च विश्वान्।
भृगून् सर्पाँश्चाङ्गिरसोऽथ सर्वान् घृतँ हुत्वा स्वायुष्या महयाम शश्वत्।।

विष्णो त्वं नो अन्तमःशर्मयच्छ सहन्त्य।
प्रतेधारा मधुश्चुत उथ्सं दुह्रते अक्षितम्।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४६. ।। भाग्यसूक्तम् ।।

ॐ प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रा वरुणा प्रातरश्विना।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातःसोममुत रुद्रꣳ हुवेम।।

प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्ता।
आद्ध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह।।

भग प्रणेत-र्भग सत्यराधो भगेमां धियमुदवददन्नः।
भगप्रणो जनय गोभि - रश्वैर्भगप्रनृभि-र्नृवन्तस्स्याम।।

उतेदानीं भगवन्तस्स्यामोत प्रपित्व उत मध्ये अह्नाम् ।
उतोदिता भघवन्सूर्यस्य वयं देवानाꣳ सुमतौ स्याम।

भग एव भगवाꣳ अस्तु देवास्तेन वयं भगवन्तःस्याम।
तं त्वा भग सर्व इज्जोहवीमि सनो भग पुर एता भवेह।।

समध्वरायोषसोऽनमन्त दधिक्रावेव शुचये पदाय।
अर्वाचीनं वसुविदं भगन्नो रथमिवाश्वावाजिन आवहन्तु।।

आश्वावती-र्गोमती-र्नउषासो वीरवतीःसद मुच्छन्तु भद्राः।
घृतं दुहाना विश्वतः प्रपीनायूयं पात स्वस्तिभिस्सदा नः।।

यो माग्ने भागिनꣳ सन्त मथाभागं चिकीऋषति।
आभागमग्ने तं कुरु मामग्ने भागिनं कुरु।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४७. ।। पवमानसूक्तम् (पुण्याहवाचनम्)।।

ॐ।। हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्तान आपःशं स्योना भवन्तु। यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानाम्। मधुश्चुतःशुचयो याः पावकास्ता न आपःशं स्योना भवन्तु।। यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपःशं स्योना भवन्तु। शिवेन मा चक्षुषा पश्यतापःशिवया तनुवोप स्पृशतत्वचं मे। सर्वां अग्नीं रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त।। पवमानःसुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा। पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः। जातवेदः पवित्रवत्। पवित्रेण पुनाहि मा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वा क्रतूं रनु। यत्ते पवित्रमर्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे। उभाभ्यां देवसवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे। वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु। वयं स्याम पतयो रयीणाम्। वैश्वानरो रश्मिभिर्मा पुनातु। वातः प्राणेनेषिरो मयो भूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीताम्।

बृहद्भिःसवितस्तृभिः। वर्षिष्ठै-देवमन्मभिः। अग्ने दक्षैःपुनाहि मा। येन देवा अपुनत। येनापो दिव्यंकशः। तेन दिव्येन ब्रह्मणा। इदं ब्रह्म पुनीमहे। यः पावमानीरध्येति। ऋषिभिःसंभृतं रसम्। सर्वं स पूतमश्नाति। स्वदितं मातरिश्वना। पावमानीर्यो अध्येति। ऋषिभिःसंभृतं रसम्। तस्मै सरस्वती दुहे। क्षीरं सर्पिर्मधूदकम्।। पावमानीःस्वस्त्ययनीः। सुदुघाहि पयस्वतीः। ऋषिभिःसंभृतो रसः। ब्राह्मणेष्वमृतं हितम्। पावमानीर्दिशन्तुनः। इमं लोकमथो अमुम्। कामान्समर्धयन्तु नः।

देवीर्देवैः समाभृताः। पावमानीःस्वस्त्ययनीः। सुदुघाहि घृतश्चुतः। ऋषिभिः संभृतो रसः। ब्राह्मणेष्वमृतं हितम्। येन देवाः पवित्रेण। आत्मानं पुनते सदा। तेन सहस्रधारेण। पावमान्यः पुनन्तु मा। प्राजापत्यं पवित्रम्। शतोद्यामं हिरण्मयम्। तेन ब्रह्म विदो वयम्। पूतं ब्रह्म पुनीमहे। इन्द्रःसुनीती सहमा पुनातु। सोमस्स्वस्त्या वरुणस्समीच्या। यमो राजा प्रमृणाभिः पुनातु मा। जातवेदा मोर्जयन्त्या पुनातु। भूर्भुवःसुवः।।

तच्छं योरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवीःस्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शं चतुष्पदे।

**।। ॐ शान्तिः शान्तिः शान्तिः ।।**

## ४८. ।। नारायणोपनिषत् ।।

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणात्प्राणो जायते । मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणाद्ब्रह्मा जायते। नारायणाद्-रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात्प्रजापतयः प्रजायन्ते। नारायणाद्-द्वादशादित्या रुद्रा वसवस्सर्वाणि च छन्दाꣳसि । नारायणादेव समुत्पद्यन्ते। नारायणे प्रवर्तन्ते । नारायणे प्रलीयन्ते ।।

ओम् । अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । द्यावापृथिव्यौ च नारायणः । कालश्च नारायणः । दिशश्च नारायणः । उर्ध्वश्च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेदꣳ सर्वम्। यद्भूतं यच्च भव्यम् । निष्कलो निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणः । न द्वितीयोऽस्ति कश्चित्। य एवं वेद । स विष्णुरेव भवति स विष्णुरेव भवति ।।

ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ओमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । एतद्वै नारायणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रुवस्सर्वमायुरेति । विन्दते प्राजापत्यꣳ रायस्पोषंगौपत्यम् । ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । य एवं वेद ।।

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् । अकार उकार मकार इति । तानेकधा समभरत्तदेतदोमिति । यमुक्त्वा मुच्यते योगीजन्मसंसारबन्धनात् । ॐ नमो नारायणायेति मन्त्रोपासकः । वैकुण्ठभुवनलोकं गमिष्यति । तदिदं परं पुण्डरीकं विज्ञानघनम् । तस्मात्तदिदावन्मात्रम् । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम्। सर्वभूतस्थमेकं नारायणम् । कारणरूपमकार परब्रह्मोम् । एतदथर्व शिरोयोऽधीते प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । माध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चापातकोपपातकात्प्रमुच्यते । सर्व वेद पारायण पुण्यं लभते । नारायणसायुज्यमवाप्नोति नारायण सायुज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

## ४९. ऐकमत्यसूक्तम् (संवादसूक्तम्)

ॐ संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्याभर ।।
संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् । देवा भागं यथा पूर्वे सञ्जानाना उपासते ।।
समानो मन्त्रः समितिः समानी समानं मनस्सह चित्तमेषाम् । समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ।। समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ।। (ऋग्वेदे अन्तिमं सूक्तम्) ।।

## ५०. गणपति पूजा विधिः

**ॐ सुमुख गणपतये नमो नमो गणपतये नम** : *(दूर्वा पुष्पं to be used)*

सुमुख। एकदन्त। कपिल। गजकर्णक। लम्बोदर। विकट।
विघ्नराज। विनायक। धूमकेत। गणाध्यक्ष । फालचन्द्र । गजानन।
वक्रतुण्ड। शूर्पकर्ण। हेरम्ब। स्कन्दपूर्वज। षोडश। सिद्धिबुद्धि।
वल्लभ । आनन्द । नर्तन । विद्या । शान्ति । सङ्कटहर।
वाञ्छाकल्प। वल्लभि। कल्याण। महागणपतये।

## ५१. शिव अष्टोत्तरशत नामावलिः

ॐ शिवाय नमः (१) ॐ महेश्वराय नमः (२) ॐ शम्भवे नमः(३)
ॐ पिनाकिने नमः ॐ शशिशेखराय नमः ॐ वामदेवाय नमः
ॐ विरूपाक्षाय नमः ॐ कपर्दिने नमः ॐ नीललोहिताय नमः
ॐ शङ्कराय नमः ॐ शूलपाणये नमः(११) ॐ खट्वाङ्गिने नमः
ॐ विष्णुवल्लभाय नमः ॐ शिपिविष्टाय नमः ॐ अम्बिकानाथाय नमः
ॐ श्रीकण्ठाय नमः ॐ भक्तवत्सलाय नमः ॐ भवाय नमः
ॐ शर्वाय नमः ॐ त्रिलोकेशाय नमः ॐ शितिकण्ठाय नमः
ॐ शिवाप्रियाय नमः ॐ उग्राय नमः ॐ कपालिने नमः
ॐ कामारये नमः ॐ अन्धकासुर सूदनाय नमः ॐ गङ्गाधराय नमः
ॐ ललाटाक्षाय नमः ॐ कालकालाय नमः ॐ कृपानिधये नमः

| | | |
|---|---|---|
| ॐ भीमाय नमः(३१) | ॐ परशुहस्ताय नमः | ॐ मृगपाणये नमः |
| ॐ जटाधराय नमः | ॐ कैलासवासिने नमः | ॐ कवचिने नमः |
| ॐ कठोराय नमः | ॐ त्रिपुरान्तकाय नमः | ॐ वृषाङ्काय नमः |
| ॐ वृषभारूढाय नमः | ॐ भस्मोद्धूलित विग्रहाय नमः (४१) | |
| ॐ सामप्रियाय नमः | ॐ स्वरमयाय नमः | ॐ त्रयीमूर्तये नमः |
| ॐ अनीश्वराय नमः | ॐ सर्वज्ञाय नमः | ॐ परमात्मने नमः |
| ॐ सोमसूर्याग्निलोचनाय नमः | ॐ हविषे नमः | ॐ यज्ञमयाय नमः |
| ॐ सोमाय नमः(५१) | ॐ पञ्चवक्त्राय नमः | ॐ सदाशिवाय नमः |
| ॐ विश्वेश्वराय नमः | ॐ वीरभद्राय नमः | ॐ गणनाथाय नमः |
| ॐ प्रजापतये नमः | ॐ हिरण्यरेतसे नमः | ॐ दुर्धर्षाय नमः |
| ॐ गिरीशाय नमः | ॐ गिरिशाय नमः (६१) | ॐ अनघाय नमः |
| ॐ भुजङ्गभूषणाय नमः | ॐ भर्गाय नमः | ॐ गिरिधन्वने नमः |
| ॐ गिरिप्रियाय नमः | ॐ कृत्तिवाससे नमः | ॐ पुरारातये नमः |
| ॐ भगवते नमः | ॐ प्रमथाधिपाय नमः | ॐ मृत्युञ्जयाय नमः (७१) |
| ॐ सूक्ष्मतनवे नमः | ॐ जगद्व्यापिने नमः | ॐ जगद्गुरवे नमः |
| ॐ व्योमकेशाय नमः | ॐ महासेनजनकाय नमः | ॐ चारुविक्रमाय नमः |
| ॐ रुद्राय नमः | ॐ भूतपतये नमः | ॐ स्थाणवे नमः |
| ॐ अहिर्बुध्न्याय नमः(८१) | ॐ दिगम्बराय नमः | ॐ अष्टमूर्तये नमः |
| ॐ अनेकात्मने नमः | ॐ सात्विकाय नमः | ॐ शुद्धविग्रहाय नमः |
| ॐ शाश्वताय नमः | ॐ खण्डपरशवे नमः | ॐ अजाय नमः |
| ॐ पाशविमोचकाय नमः | ॐ मृडाय नमः(९१) | ॐ पशुपतये नमः |
| ॐ देवाय नमः | ॐ महादेवाय नमः | ॐ अव्ययाय नमः |
| ॐ हरये नमः | ॐ भगनेत्रभिदे नमः | ॐ अव्यक्ताय नमः |
| ॐ दक्षाध्वरहराय नमः(१०१) | ॐ हराय नमः | ॐ पूषदन्तभिदे नमः |
| ॐ अव्यग्राय नमः | ॐ सहस्राक्षाय नमः | ॐ सहस्रपदे नमः |
| ॐ अपवर्गप्रदाय नमः | ॐ अनन्ताय नमः | ॐ तारकाय नमः |
| ॐ परमेश्वराय नमः (११०) | | |

**Note: Refer to page ..88.. for Trishathi and page.. 94 ...for Sri Rudra Kramam**

## ५२. शिवोपासन मन्त्राः

| | |
|---|---|
| ॐ निधनपतये नमः। | निधनपतान्तिकाय नमः। |
| ॐ ऊर्ध्वाय नमः। | ऊर्ध्वलिङ्गाय नमः। |
| ॐ हिरण्याय नमः। | हिरण्यलिङ्गाय नमः। |
| ॐ सुवर्णाय नमः। | सुवर्णलिङ्गाय नमः। |
| ॐ दिव्याय नमः। | दिव्यलिङ्गाय नमः। |
| ॐ भवाय नमः। | भवलिङ्गाय नमः। |
| ॐ शर्वाय नमः। | शर्वलिङ्गाय नमः। |
| ॐ शिवाय नमः। | शिवलिङ्गाय नमः। |
| ॐ ज्वलाय नमः। | ज्वललिङ्गाय नमः। |
| ॐ आत्माय नमः। | आत्मलिङ्गाय नमः। |
| ॐ परमाय नमः। | परमलिङ्गाय नमः। |

एतत्सोमस्य सूर्यस्य सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रम्।।

Please refer to page 38 for निघ्रुष्वैरसमायुतैः......धाताविधातापरमोतसंद्दक्.........

(१) सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व माम्। भवोद्भवाय नमः।

(२) वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः।

(३) अघोरेभ्योऽथघोरेभ्यो घोर घोरतरेभ्यः। सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।।

(४) तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।।

(५) ईशान-स्सर्व-विद्याना-मीश्वर-स्सर्व-भूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपति-र्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।।

(६) नमो हिरण्यभाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः।।

(७) ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः।।

(८) सर्वो वै रुद्र-स्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्र-स्सन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्र-स्तस्मै रुद्राय नमो अस्तु ।।

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वो चेम शन्तमं हृदे। सर्वो ह्येष रुद्र-स्तस्मै रुद्राय नमो अस्तु ।।

## ५३. बिल्वाष्टकं

१ त्रिदलं त्रिगुणाकारं त्रिणेत्रं च त्रियायुधम्।
त्रिजन्मपापसंहारम् एकबिल्वं शिवार्पणम्।।

२ त्रिशाखैर्बिल्वपत्रैश्च अच्छिद्रैः कोमलैश्शुभैः ।
तव पूजां करिष्यामि एकबिल्वं शिवार्पणम्।।

३ दर्शनं बिल्ववृक्षस्य स्पर्शनं पापनाशनम्।
अघोरपापसंहारम् एकबिल्वं शिवार्पणम्।।

४ काशीक्षेत्रनिवासं च कालभैरवदर्शनम्।
प्रयागे माधवं दृष्ट्वा एकबिल्वं शिवार्पणम्।।

५ तुलसी बिल्वनिर्गुण्डी जम्बीरा मलकं तथा।
पञ्चबिल्वमिति ख्याता एकबिल्वं शिवार्पणम्।।

६ तटाकं धननिक्षेपं ब्रह्मस्थाप्यं शिवालयम्।
कोटिकन्यामहादानम् एकबिल्वं शिवार्पणम्।।

७ दन्त्यश्वकोटिदानानि अश्वमेधशतानि च।
कोटिकन्यामहादानम् एकबिल्वं शिवार्पणम्।।

८ सालग्रामसहस्राणि विप्रान्नं शतकोटिकम्।
यज्ञकोटिसहस्राणि एकबिल्वं शिवार्पणम्।।

*अज्ञानेन कृतं पापम् ज्ञानेनापि कृतं च यत्।*
*तत्सर्वं नाशमायातु एकबिल्वं शिवार्पणम्।।*

*एकैकबिल्वपत्रेण कोटियज्ञफलं लभेत्।*
*महादेवस्य पूजार्थं एकबिल्वं शिवार्पणम्।।*

*अमृतोद्भववृक्षस्य महादेवप्रियस्य च ।*
*मुच्यन्ते कण्टकाघाता कण्टकेभ्यो हि मानवाः*

-o-o-o-o-o-

# ५४. लिङ्गाष्टकम्

ब्रह्ममुरारिसुरार्चितलिङ्गं निर्मलभाषितशोभितलिङ्गम् ।
जन्मजदुःखविनाशकलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम्।। (१)

देवमुनिप्रवरार्चितलिङ्गं कामदहं करुणाकर लिङ्गम्।
रावणदर्पविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।। (२)

सर्वसुगन्धिसुलेपितलिङ्गं बुद्धिविवर्धनकारणलिङ्गम् ।
सिद्धसुरासुरवन्दितलिङ्गम् तत्प्रणमामि सदाशिवलिङ्गम् ।। (३)

कनकमहामणिभूषितलिङ्गं फणिपतिवेष्टित शोभितलिङ्गम् ।
दक्षसुयज्ञविनाशन लिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।। (४)

कुंकुमचन्दनलेपितलिङ्गं पंकजहारसुशोभिलिङ्गम् ।
संचितपाप विनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।। (५)

देवगणार्चित सेवितलिङ्गं भावैर्भक्तिभिरेव च लिङ्गम् ।
दिनकरकोटिप्रभाकरलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।। (६)

अष्टदलोपरिवेष्टितलिङ्गं सर्वसमुद्भवकारणलिङ्गम् ।
अष्टदरिद्रविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।। (७)

सुरगुरुसुरवरपूजितलिङ्गं सुरवनपुष्पसदार्चितलिङ्गम् ।
परात्परं परमात्मकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।। (९)

लिङ्गाष्टकमिदं पुण्यं यः पठेत् शिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ।। (१०)

-o-o-o-o-o-

## ५५. शिवपञ्चाक्षरस्त्रोत्रम्

नागेन्द्रहाराय त्रिलोचनाय - भस्माङ्गरागाय महेश्वराय।
नित्याय शुद्धाय दिगम्बराय - तस्मै नकाराय नमः शिवाय।। (१)

मन्दाकिनी सलिल चन्दन चर्चिताय - नन्दीश्वर प्रमथनाथ महेश्वराय।
मन्दारपुष्पबहुपुष्पसुपूजिताय - तस्मै मकाराय नमः शिवाय।। (२)

शिवाय गौरीवदनाब्जबाल - सूर्याय दक्षाध्वरनाशकाय।
श्रीनीलकण्ठाय वृषध्वजाय - तस्मै शिकाराय नमः शिवाय।। (३)

वसिष्ठकुम्भोद्भवगौतमार्य - मुनीन्द्रदेवार्चितशेखराय।
चन्द्रार्कवैश्वानरलोचनाय - तस्मै वकाराय नमः शिवाय।। (४)

यज्ञस्वरूपाय जटाधराय - पिनाकहस्ताय सनातनाय।
दिव्याय देवाय दिगम्बराय - तस्मै यकाराय नमः शिवाय।। (५)

पञ्चाक्षरमिदं पुण्यं यःपठेच्छिवसन्निधौ । शिवलोकमवाप्नोति शिवेन सह मोदते ।।

(.)(.)(.)(.)(.)

## ५६. दारिद्र्यदहन शिवस्तोत्रम्

विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखर भूषणाय।
कर्पूरकुन्दधवलाय जटाधराय दारिद्र्यदुःख दहनाय नमःशिवाय।। (१)

गौरीप्रियाय रजनीशकलाधराय कालान्तकाय भुजगाधिपकङ्कणाय।
गङ्गाधराय गजराजविमर्दनाय दारिद्र्यदुःख दहनाय नमःशिवाय।। (२)

भक्तिप्रियाय भवरोगभयापहाय उग्राय दुर्गभवसागरतारणाय।
ज्योतिर्मयाय पुनरुद्भववारणाय दारिद्र्यदुःख दहनाय नमःशिवाय।। (३)

चर्माम्बरयाय शवभस्मविलेपनाय भालेक्षणाय फणिकुण्डलमण्डिताय।
मञ्जीरपादयुगलाय जटाधराय दारिद्र्यदुःख दहनाय नमःशिवाय।। (४)

पञ्चाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमण्डनाय।
आनन्दभूमिवरदाय तमोहराय दारिद्र्यदुःख दहनाय नमःशिवाय।। (५)

भानुप्रियाय दुरितार्णवतारणाय कालान्तकाय कमलासनपूजिताय।
नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्यदुःख दहनाय नमःशिवाय।। (६)

रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नागराज निकेतनाय।
पुण्याय पुण्यचरिताय सुरार्चिताय दारिद्र्यदुःख दहनाय नमःशिवाय।। (७)

मुक्तीश्वराय फलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय।
मातङ्गचर्मवसनाय महेश्वराय दारिद्र्यदुःख दहनाय नमःशिवाय।। (८)

गौरीविलास भुवनाय महोदयाय पञ्चाननाय शरणागत रक्षकाय।
शर्वाय सर्वजगतामधिपाय तस्मै दारिद्र्यदुःख दहनाय नमःशिवाय।। (९)

(.)(.)(.)(.)(.)

## ५७. अर्धनारीश्वरस्तोत्रम्

चाम्पेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय।। (१)

कस्तूरिकाकुङ्कुमचर्चितायै चितारजःपुञ्जविचर्चिताय।
कृतस्मरायै विकृतस्मराय नमःशिवायै च नमः शिवाय।। (२)

झणत्क्वणत्कङ्कणनूपुरायै पादाब्जराजत्फणिनूपुराय।
हेमाङ्गदायै भुजगाङ्गदाय नमः शिवायै च नमः शिवाय।। (३)

विशालनीलोत्पललोचनायै विकासिपङ्केरुहलोचनाय।
समेक्षणायै विषमेक्षणाय नमः शिवायै च नमः शिवाय।। (४)

मन्दारमालाकलितालकायै कपालमालाङ्कितकन्धराय।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय।। (५)

अम्भोधरश्यामलकुन्तलायै तटिद्प्रभाताम्रजटाधराय।
निरीश्वरायै निखिलेश्वराय नमः शिवायै च नमः शिवाय।। (६)

प्रपञ्चसृष्ट्युन्मुखलास्यकायै समस्तसंहारकताण्डवाय।
जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय।। (७)

प्रदीप्तरत्नोज्ज्वलकुण्डलायै स्फुरन्महापन्नगभूषणाय।
शिवान्वितायै च शिवान्विताय नमः शिवायै च नमः शिवाय।। (८)

एतत्पठेदष्टकमिष्टदं यो भक्त्या स मान्यो भुवि दीर्घजीवी।
प्राप्नोति सौभाग्यमनन्तकालं भूयात्सदा तस्य समस्तसिद्धिः।। (९)

(.)(.)(.)(.)(.)

## ५८.द्वादशज्योतिर्लिङ्गस्मरणम्

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम्। उज्जयिन्यां महाकालमोङ्कारममलेश्वरम्।। (१)

परल्यां वैद्यनाथं च डाकिन्यां भीमशङ्करम्। सेतुबन्धे तु रामेशं नागेशं दारुकावने।। (२)

वाराणस्यां तु विश्वेशं त्र्यम्बकं गौतमीतटे। हिमालये तु केदारं घुश्मेशं च शिवालये।। (३)

एतानि ज्योतिर्लिङ्गानि सायं प्रातः पठेन्नरः। सप्तजन्मकृतं पापं स्मरणेन विनश्यति।। (४)

## ५९. महालक्ष्म्यष्टकम्

**नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते। शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते।। (१)**

नमस्ते गरुडारूढे कोलासुरभयङ्करि। सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते।। (२)

सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि। सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते।। (३)

सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायनि। मन्त्रमूर्ते सदा देवि महालक्ष्मि नमोऽस्तु ते।।(४)

आद्यन्तरहिते देवि आद्यशक्तिमहेश्वरि। योगजे योगसम्भूते महालक्ष्मि नमोऽस्तु ते।। (५)

स्थूलसूक्ष्ममहारौद्रे महाशक्तिमहोदरे। महापापहरे देवि महालक्ष्मि नमोऽस्तु ते।। (६)

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि। परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते।। (७)

श्वेताम्बरधरे देवि नानालङ्कारभूषिते। जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते।। (८)

महालक्ष्म्यष्टकस्तोत्रं यः पठेत् भक्तिमान्नरः। सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा।।(९)

एककाले पठेन्नित्यं महापापविनाशनम्। द्विकालं यः पठेन्नित्यं धनदान्यसमन्वितः।। (१०)

त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम्। महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदाशुभा।। (११)

(.)(.)(.)(.)(.)

## ६०. अन्नपूर्णास्तोत्रम्

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।।
अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ।
माता मे पार्वती देवी पिता देवो महेश्वरः । बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ।।

**(धूपं, दीपं, नैवेद्यं)**

## ६१. धूप मन्त्रं

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानंदृꣳहस्व माह्वारमित्रस्यं त्वा चक्षुषा प्रेक्षेमा भेर्मा संविक्था मा त्वाहिꣳसिषम् ।।

## ६२. एक दीपं

उद्दीप्यस्व जातवेदोऽपघ्निं निरृतिं मम। पशुꣳश्च मह्यमावह जीवनं च दिशोदिश।
मानोहिꣳसीज्जातवेदो गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परिपातय।।
एक हारति दीपं दर्शयामि।।

## ६३. नैवेद्य समर्पणं

*परिषेचनं कृत्वा*

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसि मधुमत्पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।। मधु मधु मधु।।

आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः दिव्यान्नं घृतगुळपायसं नालिकेर खण्डद्वयं कदलीफलं महानैवेद्यं निवेदयामि। मध्ये मध्ये अमृतपानीयं समर्पयामि। अमृतापिधानमसि।

हस्तप्रक्षालनं समर्पयामि। पादप्रक्षालनं समर्पयामि। पुनराचमनीयं समर्पयामि। भूर्भुवःसुवः।
पूगीफलसमायुक्तं नागवल्ली दलैर्युतम्। कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः । कर्पूर ताम्बूलं निवेदयामि। समस्तोपचारान् समर्पयामि।
निर्माल्य देवतायै नमः निर्माल्यं परिकल्पयामि | **(Take a small portion of Neivedhyam and keep for Nandikesha Pooja to be offered with a banana after performing Nandipooja Page No.85)**

गोघ्न इति गो - घ्ने
पूरुषघ्ने क्षयद्वीराय
क्षयद्वीराय सुम्नं
सुम्नमस्मे
अस्मे इत्यस्मे
आस्त्वित्यस्तु ।
च नः
अधि च
देव ब्रूहि
अधा च
नश्शर्म
यच्छद्विबार्हाः
स्तुहि श्रुतं
गर्तसदंयुवानं
युवानं मृगं
न भीमं
उपहत्नुमुग्रं
मृडाजरित्रे
रुद्रस्तवानः
अन्यं ते
अस्मन्नि
वपन्तु सेनाः
परिणः
रुद्रस्य हेतिः
वृणक्तु परि
त्वेषस्य दुर्मतिः
दुर्मतिरिति दुः मतिः
अवस्थिरा

उतपूरुषघ्ने
पूरुषघ्न इति पूरुष - घ्ने
क्षयद्वीरायेति क्षयत्-वीराय
अस्मेते
ते अस्तु
रक्षा च
नो अधि
च देव
ब्रूह्यध
च नः
शर्म यच्छ
द्विबर्हा इति द्वि - बर्हाः ।
श्रुतं गर्तसदं
गर्तसदमिति गर्त - सदं
मृगं न
भीममुपहत्नुं
उग्रमित्युग्रम् ।
जरित्रे रुद्र
स्तवानो अन्यं
ते अस्मत्
निवपन्तु
सेना इति सेनाः ।
नो रुद्रस्य
हेतिर्वृणक्तु
परित्वेषस्य
दुर्मतिरघायोः
अघायोरित्यघ - योः ।
स्थिरामघवद्भ्यः

मघवद्भ्यस्तनुष्व
तनुष्व मीढ्वः
तोकाय तनयाय
मृडयेति मृडय
मीढुष्टमेति मीढुः - तम
शिवतमेति शिव - तम
नस्सुमनाः
सुमना इति सु - मनाः
परमे वृक्षे
आयुधं निधाय
निधायेति नि - धाय
वसान आ
चर पिनाकं
बिभ्रदा
गहीति गहि ।
विकिरिदेतिवि - किरिद्
विलोहितेति वि - लोहित
ते अस्तु
भगव इति भग - वः ।
ते सहस्रं
हेतयोऽन्यं
अस्मन्नि
वपन्तु ताः
सहस्राणि सहस्रधा
सहस्रधेति सहस्र - धा
तव हेतयः ।
तासामीशानः
भगवः पराचीना

मघवद्भ्य इति मघवत् - भ्यः
मीढ्वस्स्तोकाय
तनयाय मृडय
मीढुष्टम शिवतम
शिवतम शिवः
शिवो नः
सुमना भव
भवेति भव ।
वृक्ष आयुधं
निधाय कृत्तिं
कृत्तिं वसानः
आ चर
पिनाकम् बिभ्रत्
आगहि
विकिरिद् विलोहित
विलोहित नमः
नमस्ते
अस्तु भगवः
यास्ते
सहस्रं हेतयः
अन्यमस्मत्
निवपन्तु
ता इति ताः
सहस्रधा बाहुवोः
बाहुवोस्तव
हेतय इति हेतयः
ईशानो भगवः
भगव इति भग - वः ।

पराचीनामुखा

कृधीति कृति (**एकादशोऽनुवाकः**)

सहस्रशो ये

ये रुद्राः

अधि भूम्यां

तेषाꣳ सहस्रयोजने

सहस्रयोजन इति सहस्र - योजने

धन्वानि तन्मसि

अस्मिन्महति

अर्णवेन्तरिक्षे

भवा अधि

नीलग्रीवाः शितिकण्ठाः

शितिकण्ठाः शर्वाः

शर्वा अधः

क्षमाचरा इति क्षमा - चराः ।

नीलग्रीवा इति नील - ग्रीवाः

शितिकण्ठा इति शिति - कण्ठाः

रुद्रा उपश्रिताः

ये वृक्षेषु

सस्पिंजरा नीलग्रीवाः

नीलग्रीवा इति नील - ग्रीवाः

ये भूतानां

अधिपतयो विशिखासः

विशिखासः कपर्दिनः

कपर्दिन इति कपर्दिनः ।

अन्नेषु विविध्यन्ति

विविध्यन्तीति वि - विध्यन्ति

पिबतो जनान्

मुखा कृधि

सहस्राणि सहस्रशः

सहस्रश इति सहस्र - शः

रुद्रा अधि

भूम्यामिति भूम्याम्

सहस्रयोजनेव

अवधन्वानि

तन्मसीति तन्मसि

महत्यर्णवे

अन्तरिक्षे भवाः

अधीत्यधि ।

नीलग्रीवा इति नील - ग्रीवाः

शितिकण्ठा इति शिति - कण्ठाः

अधः क्षमाचराः

नीलग्रीवाः शितिकण्ठाः

शितिकण्ठा धिवं

दिवꣳ रुद्राः

उपस्रिता इत्युप - श्रिताः ।

वृक्षेषु सस्पिंजराः

नीलग्रीवा विलोहिताः

विश्लोहिता इति वि - लोहिताः ।

भूतानमधिपतयः

अधिपतय इत्यधि - पतयः

विशिखास इति वि - शिखासः

ये अन्नेषु

विविध्यन्ति पात्रेषु

पात्रेषु पिबतः

जनानिति जनान् ।

ये पथां — पथां पथिरक्षयः
पथिरक्षय ऐलबृदाः — पथिरक्षय इति पथि - रक्षयः
ऐलबृदायव्युधः — यव्युध इति यव्युधः ।
येतीर्थानि — तीर्थानि प्रचरन्ति
प्रचरन्ति सृकावन्तः — प्रचरन्तीति प्र - चरन्ति
सृकावन्तो निषंगिणः — सृकावन्त इति सृका - वन्तः
निषंगिण इति नि - संगिनः । — य एतावन्तः
एतावन्तश्च — च भूयाꣳस सः
भूयाꣳस सश्च — च दिशः
दिशो रुद्राः — रुद्रा वितस्थिरे
वितस्थिर इति वि - तस्थिरे — तेषाꣳ सहस्रयोजने
सहस्रयोजनेव — सहस्रयोजन इति सहस्र - योजने
अवधन्वानि — धन्वानि तन्मसि
तन्मसीति तन्मसि । — नमो रुद्रेभ्यः
रुद्रेभ्यो ये — ये पृथिव्यां
पृथिव्यां ये — येऽन्तरिक्षे
अन्तरिक्षे ये — ये दिवि
दिवि येषां — येषामन्नं
अन्नं वातः — वातो वर्षं
वर्षमिषवः — इषवस्तेभ्यः
तेभ्यो दश — दशप्राचीः
प्राचीर्दश — दशदक्षिण
दक्षिणा दश — दश प्रतीचीः
प्रतीचीर्दश — दशोदीचीः
उदीचीर्दश — दशोर्ध्वाः
ऊर्ध्वास्तेभ्य — तेभ्यो नमः
नमस्ते — ते नः
नो मृडयन्तु — मृडयन्तु ते

ते यं

द्विष्मो यः

च नः

द्वेष्टि तं

वो जम्भे

दधामिति दधामि

त्र्याम्बकमिति त्रिः - अंबकं

सुगन्धिं पुष्टिवर्धनं

पुष्टिवर्धनमिति पुष्टि - वर्धनं ।

इव बन्धनात्

मृत्योर्मुक्षीय

मामृतात्

यो रुद्रः

अग्नौ यः

अप्सु यः

य ओषधीषु

यो रुद्रः

विश्वा भुवना

आविवेश तस्मै

तस्मै रुद्राय

नमो अस्तु

तमुष्टुहि

स्तुहि यः

स्विषु सुधन्वा

सुधन्वा यः

यो विश्वस्य

क्षयति भेषजस्य

यक्ष्वामहे

यंद्विष्मः

यश्च

नोद्वेष्टि

तं वः

जम्भे दधामि

त्र्यंबकं यजामहे

यजामहे सुगन्धिं

सुगन्धिमिति सु - गन्धिं

उर्वारुकमिव

बन्धनान्मृत्योः

मुक्षीय मा

अमृतादित्यमृतात् ।

रुद्रो अग्नौ

यो अप्सु

अप्सिवत्यप् - सु

ओषधीषु यः

रुद्रो विश्वा

भुवनाविवेश

आविवेशेत्या - विवेश

रुद्राय नमः

अस्त्वित्यस्तु ।

ऊइत्यू

यः स्विषुः

स्विषुरिति सु - इषुः

सुधन्वा इति सु - धन्वा

विश्वस्यक्षयति

भेषजस्येति भेषग - जस्य

महे सौमनसाय

सौमनसाय रुद्रं रुद्रं नमोभिः
नमोभिरिति नमः - भिः देवमसुरं
असुरं दुवस्य दुवस्येति दुवस्य
अयं मे मे हस्तः
हस्तो भगवान् भगवानयं
भगवानिदि भग - वान् अयं मे
मे भगवत्तरः अयं मे
मे विश्वभेषजः विश्वभेषजोयं
विश्वभेषज इति विश्व - भेषजः अय - शिवाभिमर्शनः
शिवाभिमर्शन इति शिव - अभिमर्शनः

ओं शान्तिः शान्तिः शान्तिः ।।।

## ८३. श्री चमक क्रम पाठः

एका च च मे
मे तिस्रः तिस्रश्च
च मे मे पंच
पंच च च मे
मे सप्त सप्त च
च मे मे नव
नव च च मे
म एकादश एकादश च
च मे मे त्रयोदश
त्रयोदश च त्रयोदशेतित्रयः - दश
च मे मे पंचदश
पंचदश च । पंचदशेति पंच - दश
च मे मे सप्तदश
सप्तदश च सप्तदशेति सप्त - दश

च मे

नवदश च

च मे

एकविं शतिश्च

च मे

त्रयोविं शतिश्च

च मे

पंचविं शतिश्च

च मे

सप्तविंशतिश्च

च मे

नवविंशतिश्च

च मे

एकत्रिंशश्च

च मे

त्रयस्त्रिंशश्च

च मे

चतस्रश्च

मेष्टौ

च मे

द्वादश च

मे षोडश

च मे

विंशतिश्च

मे चतुर्विगुंशतिश्च

च मे

अष्टाविंशतिश्च

च मे

मे नवदश

नवदशेति नव - दश

म एकविं शतिः

एकविं शतिरित्येक - विं शतिः

मे त्र्योविं शतिः

त्रयोविं शतिरिति त्रयः - विं शतिः

मे पंचविंशतिः

पंचविं शतिरिति पंच - विंशतिः

मे सप्तविं शतिः

सप्तविंशतिरिति सप्तविंशतिः

मे नवविंशतिः

नवविंशतिरिति नव - विंशतिः

म एकत्रिंशत्

एकत्रिंशदित्येक - त्रिंशत्

मे त्रयस्त्रिंशत्

त्रयस्त्रिंशदिति त्रयः - त्रिगुंशत्

मे चतस्रः

च मे

अष्टौ च

मे द्वादश

च मे

षोडश च

मे विंशतिः

च मे

चतुर्विंशतिरिति चतुः - विंशतिः

मे अष्टाविंशतिः

अष्टाविंशतिरित्यष्टा - विंशतिः

मे द्वात्रिंशत्

| | |
|---|---|
| द्वात्रि‡शच्च | च मे |
| मे षट्त्रि‡शत् | षट्त्रि‡शच्च |
| षट्त्रि‡शदिति षट् - त्रि‡शत् | च मे |
| मे चत्वारि‡शत् | चत्वारि‡शच्च |
| च मे | मे चतुश्चत्वारि‡शत् |
| चतुश्चत्वारि‡शच्च | चतुश्चत्वारि‡शदिति चतुः - चत्वारि‡शत् |
| च मे | मेष्टाचत्वारि‡ शत् |
| अष्टाचत्वारि‡शच्च | अष्टाचत्वारि‡शदित्यष्टा - चत्वारि‡ शत् |
| च मे | मे वाजः |
| वाजश्च | च प्रसवः |
| प्रसवश्च | प्रसव इति - प्र - सवः |
| चापिजश्च | अपिजश्च |
| अपिजइत्यपि - जः | च क्रतुः |
| क्रतुश्च | च सुवः |
| सुवश्च | च मूर्द्धा |
| मूर्द्धा च | च व्यश्रियः |
| व्यश्रियश्च | व्यश्रिय इति वि - अश्रियः |
| चान्त्यायनः | आन्त्यायनश्च |
| चान्त्यः | अन्त्यश्च |
| च भौवनः | भौवनश्च |
| च भुवनः | भुवनश्च |
| चाधिपतिः | अधिपतिश्च |
| अधिपतिरित्यधि - पतिः | चेति च। |

**ओं शान्तिः शान्तिः शान्तिः**

| | |
|---|---|
| इडादेवहूः | देवहूर्मनुः |
| देवहूरितिदेव - हूः | मनुर्यज्ञनीः |
| यज्ञनीर्बृहस्पतिः | यज्ञनीरितियज्ञ - नीः |
| बृहस्पतिरुक्तामदानि | उक्तामदानिशꣳसिषत् |
| उक्तामदानीत्युक्ता - मदानि | शꣳसिषद्विश्वे |
| विश्वे देवाः | देवाः सूक्तवाचः |
| सूक्तवाचःपृथिवी | सूक्तवाच इति सूक्त - वाचः |
| पृथिविमातः | मातर्मा |
| मामा | माहिꣳसीः |
| हिꣳसीर्मधु | मधु मनिष्ये |
| मनिष्येमधु | मधु जनिष्ये |
| जनिष्ये मधु | मधु वक्ष्यामि |
| वक्ष्यामि मधु | मधु वदिष्यामि |
| वदिष्यामि मधुमतीं | मधुमतींदेवेभ्यः |
| मधुमतीमिति मधु - मतीं | देवेभ्यो वाचम् |
| वाचमुद्यासं | उद्यासꣳशुश्रूषेण्यां |
| शुश्रूषेण्यां मनुष्येभ्यः | मनुष्येभ्यस्तं |
| तं मा | मा देवाः |
| देवा अवन्तु | अवन्तु शोभायै |
| शोभायै पितरः | पितरोऽनु |
| अनुमदन्तु | मदन्त्विति मदन्तु |

ओं शान्तिः शान्तिः शान्तिः ।।।।

## ८४. ।। तैत्तिरीयोपनिषत् ।।

ॐ शं नो मित्र-श्शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णु-रुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।।१।।

### ।। शिक्षाशास्त्रार्थसङ्ग्रहः ।।

शीक्षां व्याख्यास्यामः । वर्ण-स्स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्त-श्शीक्षाध्यायः ।।२।।

### संहितोपासनम्

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातस्स꣡ꣳहिताया उपनिषदं व्याखास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिष-मधिविद्य-मधिप्रज-मध्यात्मम् । ता महास꣡ꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौ रुत्तररूपम् । आकाश-स्सन्धिः ।।३।। वायु-स्सन्धानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निःपूर्वरूपम् । आदित्य उत्तररूपम् । आपस्सन्धिः । वैद्युतस्सन्धानम् । इत्यधित्यौतिषम् । अथाधिविद्यम् । आचार्यःपूर्वरूपम् ।।४।। अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचन꣡ꣳ सन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजासन्धिः । प्रजनन꣡ꣳ सन्धानम् । इत्यधिप्रजम् ।।५।। अथाध्यात्मम् । अधराहनुः पूर्वरूपम् । उत्तराहनुरुत्तररूपम् । वाक्सन्धिः । जिह्वासन्धानम् । इत्यध्यात्मम् । इतीमामहास꣡ꣳहिताः । य एवमेता महास꣡ꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । बह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ।।६।।

### ।। मेधादि-सिद्ध्यर्था आवहन्तीहोम-मन्त्राः ।।

ॐ यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृताथ्सम्बभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देवधारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरिविश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय । आवहन्ती वितन्वाना ।।७।।
कुर्वाणा चीर-मात्मनः । वासा꣡ꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रिय-मावह-लोमशां पशुभिस्सह स्वाहा । आमायन्तु ब्रह्मचारिणस्स्वाहा । विमाऽऽयन्तु ब्रह्मचारिणस्स्वाहा । प्रमाऽऽयन्तु ब्रह्मचारिणस्स्वाहा । दमायन्तु ब्रह्मचारिणस्स्वाहा । शमायन्तु ब्रह्मचारिणस्स्वाहा । ।।८।।

यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन् सहस्रशाखे । निभगाऽहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवताऽऽयन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वत-स्स्वाहा । प्रतिवेशोऽऽसि प्रमाभाहि प्रमापद्यस्व ।।९।।

## ।। व्याहृत्युपासनम् ।।

भू-र्भुव-स्सुव-रिति वा एता-स्तिस्रो व्याहृतयः । तासामुहस्मै तां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । भूरिति वा अयं लोकः भुव इत्यन्तरिक्षम् । सुव-रित्यसौ लोकः ।।१०।।

मह इत्यादियः । आदित्येन वाव सर्वे-लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुव-रित्यादियः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भू-रिति वा ऋचः । भुव इति सामानि । सुव-रिति यजूꣳषि ।।११।।

मह इति ब्रह्म । ब्रह्मणा वाव सर्ववेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुव-रिति व्यानः मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मैदेवा बलिमावहन्ति ।। १२।।

## ।। मनोमयत्वादि-गुणक-ब्रहमोपासनया स्वाराज्य-सिद्धिः ।।

स य एषोऽन्त-र्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एषस्तन इवावलम्बते । सैन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ।।१३।।
सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्ध-ममृतम् । इति प्राचीन योग्योपास्व ।। १४।।

### ।। पृथिव्याद्युपाधिक-पञ्च-ब्रह्मोपासनम् ।।

पृथिव्यन्तरिक्षं द्यौ-र्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्य-श्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानस्समानः । चक्षुश्श्रोत्रं मनो वाक् त्वक् । चर्ममाꣳसग्ग् स्नावाऽस्थि मज्जा । एत-दधिविधाय ऋषि-रवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तग्ग् स्पृणोतीति ।।१५।।

### ।। प्रणवोपासनम् ।।

ओ-मिति ब्रह्म । ओमितीदꣳ सर्वम् । ओमित्येत-दनुकृति हस्म वा अप्योश्रावयेत्याश्रावयन्ति । ओ-मिति सामानि गायन्ति । ओꣳ शो-मिति शस्त्राणि शꣳसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओ-मिति ब्रह्मा प्रसौति। ओ-मित्यग्निहोत्र-मनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्रवानीति । ब्रह्मैवोपाप्नोति ।।१६।।

### ।। स्वाध्याय-प्रशंसा ।।

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथी तरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्याय प्रवचने एवेति नाको मौद्गल्यः । तद्धि तप-स्तद्धि तपः ।। १७।।

### ।। ब्रह्मज्ञान-प्रकाशक-मन्त्रः ।।

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरे-रिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृत-मस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ।।१८।।

### ।। शिष्यानुशासनम् ।।

वेदमनूच्याचार्योऽन्तेवासिन-मनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाद्यायप्रवचनाभ्यां न प्रमदितव्यम् ।। १९ ।।

देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि । ।।२०।।

नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽऽसने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ।। २१ ।।

ये तत्र ब्राह्मणा-स्सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्म-कामास्स्युः । यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणा-स्सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्म-कामास्स्युः । यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः। एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् ।।२२।।

## ।। उत्तरशान्तिपाठः ।।

ॐ शं नो मित्र-श्शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णु-रुरुक्रमः। नमो ब्रह्मणे । नमस्ते वायो । त्व-मेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद् वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।।

## ८५. द्वितीया ब्रह्मानन्दवल्ली

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीत-मस्तु मा विद्विषावहै ।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

### उपनिषत्सारसंग्रहः

ॐ ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन्।सोऽश्नुते सर्वान् कामान्सह । ब्रह्मणा विपश्चितेति । तस्माद्वा एतस्मादात्मन आकाशस्संभूतः । आकाशाद्वायुः । वायो-रग्निः ।अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः। ओषधीभ्योऽन्नम् । अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः। तस्येद-मेव शिरः। अयं दक्षिणाः पक्षः। अयमुत्तरः पक्षः।अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।।१।।

### पञ्चकोशविवरणम्

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीग्ंश्रिताः । अथो अन्नेनैव जीवन्ति । अथैन-दपियन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति। तस्माद्वा एतस्मा-दन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः। आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।।२।।

प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूताना-मायुः । तस्मा-त्सवायुषमुच्यते। सर्व-मेव त आयु-र्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूताना-मायुः। तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः। आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति । ।।३।।

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महःपुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।। ४ ।।

विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवास्सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत इति। तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञान मयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियं-मेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।।५।।

असन्नेव स भवति। असिद्-ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्त-मेनं ततो विदु-रिति। तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः । उताविद्वा-नमुं लोकं प्रेत्य । कश्चन गच्छती ३ । आहो विद्वा-नमुं लोकं प्रेत्य । कश्चित्समश्नुता ३ उ । सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तप-स्तप्त्वा । इदगं-सर्व-मसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्य-मभवत् । यदिदं किंच । तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति ।।६।।

### अभयप्रतिष्ठा

असद्वा इद-मग्र आसीत् । ततो वै सदजायत । तदात्मानग् स्वयं-मकुरुत । तस्मा-त्तत्सुकृतमुच्यत इति । यद्वै तत्सुकृतम् । रसो वै सः । रसग् ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदर-मन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति ।।७।।

### ब्रह्मानन्दमीमांसा

भीषाऽस्मा-द्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्नि-श्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणा मानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणा मानन्दाः । स एको देवगन्धर्वाणा-मानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणा-मानन्दाः । स एकः पितृणां चिरलोक-लोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोक लोकाना-मानन्दाः । स एक आजानजानां देवाना-मानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवाना-मानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवाना मानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं

देवानां-मानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पते-रानन्दः। श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पते-रानन्दाः । स एकः प्रजापते-रानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापते-रानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित्। अस्माल्लोकात्प्रेत्य । एतमन्नमय-मात्मान-मुपसंक्रामति । एतं प्राणमय मात्मानमुपसंक्रामति । एतं मनोमय-मात्मान-मुपसंक्रामति । एतं विज्ञानमय-मात्मान-मुपसंक्रामति । एतमानन्द-मय-मात्मान-मुपसंक्रामति । तदप्येष श्लोको भवति। ।।८।।

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳ ह वा व न तपति । किमहꣳ साधु नाकरवम् । किमहं पाप-मकरव-मिति । स य एवं विद्वा-नेते आत्मानगग् स्पृणुते । उभे ह्येवैष एते आत्मानगग् स्पृणुते । य एवं वेद । इत्युपनिषत्।।९।।

ॐ सह ना-ववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीत-मस्तु मा विद्विषावहै ।

**।। ॐ शान्तिः शान्तिः शान्तिः ।।**

## ८६. तृतीया भृगुवल्ली

ॐ सह ना-ववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीत-मस्तु मा विद्विषावहै ।

**।। ॐ शान्तिः शान्तिः शान्तिः ।।**

### ब्रह्मजिज्ञासा

भृगु-र्वै वारुणिः । वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुश्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ।।१।।

**पञ्चकोशान्तःस्थित-ब्रह्मनिरूपणम्**

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुन-रेव वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ।।२।।

प्राणो ब्रह्मेति व्यजानात् । प्राणा-द्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुन-रेव वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ।। ३।।

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुन-रेव वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ।।४।।

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञाना-द्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुन-रेव वरुणं पितर-मुपससार। अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ।।५।।

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभि संविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभि-र्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ६ ।।

## अन्नब्रह्मोपासनम्

अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेत-दन्न-मन्ने प्रतिष्ठितम् । स य एत-दन्न-मन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवा-नन्नादो भवति । महान् भवति प्रजया पशुभि-र्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ७ ।।

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेत-दन्न-मन्ने प्रतिष्ठितम् । स य एत-दन्न-मन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवा-नन्नादो भवति । महान् भवति प्रजया पशुभि-र्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ८ ।।

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेत-दन्न-मन्ने प्रतिष्ठितम् । स य एत-दन्न-मन्ने-प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवा-नन्नादो भवति । महान् भवति प्रजया पशुभि-र्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ९ ।।

**सदाचारप्रदर्शनम् । ब्रह्मानन्दानुभवः**

न कंचन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यते । य एवं वेद । क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गति-रिति पादयोः । विमुक्ति-रिति पायौ । इति मानुषी-स्समाज्ञाः । अथ दैवीः । तृप्ति-रिति वृष्टौ । बल-मिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजाति-रमृत-मानन्द इत्युपस्थे । सर्व-मित्याकाशे । तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्त-स्सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासा-वादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एत-मन्नमय-मात्मान-मुपसंक्रम्य । एतं प्राणमय-मात्मान-मुपसंक्रम्य । एतं मनोमय-मात्मान-मुपसंक्रम्य । एतं विज्ञानमय-मात्मान-मुपसंक्रम्य । एतमानन्दमय-मात्मान-मुपसंक्रम्य । इमान् लोकान् कामान्नी काम-रूप्यनुसंचरन् । एतत्साम गायन्नास्ते। हा ३ वु हा ३ वु हा ३ वु। अहमन्न-महमन्न-महमन्नम्। अहमन्नादो २ ऽहमन्नादो २ ऽहमन्नादः । अहग् श्लोककृ-दहग् श्लोककृ-दहग् श्लोककृत्। अहमस्मि प्रथमजा ऋता ३ स्य । पूर्वं देवेभ्यो अमृतस्य ना ३ भाइ । योमा ददाति स इदेव मा ३ वाः। अह-मन्नमन्न-मदन्तमा ३ द्मि । अहं विश्वं भुवन-मभ्यभवाम् । सुवर्न ज्योतीः । य एवं वेद । इत्युपनिषत् ।। १०।।

ॐ सह ना-ववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीत-मस्तु मा विद्विषावहै ।

**।। ॐ शान्तिः शान्तिः शान्तिः ।।**

# ८७. ।। नवग्रह सूक्तम् ।।

ॐ आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंच । हिरण्ययेन सविता रथेनाऽऽदेवो यातिभुवना विपश्यन् । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् । निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **आदित्याय** नमः ।। १ ।।

ॐ आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य संगथे । अप्सुमे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निञ्चे विश्वशंभुवमापश्च विश्वभेषजीः । गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **सोमाय** नमः ।।२।।

ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳरेताꣳसि जिन्वति । स्योना पृथिवि भवाऽनृक्षरा निवेशनी । यच्छानश्शर्म सप्रथाः । क्षेत्रस्य पतिना वयꣳहिते नेव जयामसि। गामश्वं पोषयित्वा स नो मृडातीदृशे ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **अङ्गारकाय** नमः ।।३।।

ॐ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयञ्च । पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतम् । इदं विष्णु-र्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳ सुरे। विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **बुधाय** नमः ।।४।।

ॐ बृहस्पते अतियदर्यो अर्हाद्-द्युमद्विभाति क्रतुमज्जनेषु । यधीदयच्छवसर्तप्रजात तदस्मासु द्रविणन्धेहि चित्रम् । इन्द्रमरुत्व इह पाहि सोमं यथा शार्याते अपिबस्सुतस्य । तव प्रणीती तव शूरशर्मन्नाविवासन्ति कवयस्सुयज्ञाः । ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः । सबुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **बृहस्पतये** नमः ।।४।।

ॐ प्रवशुक्राय भानवे भरध्वम् । हव्यं मतिं चाग्नये सुपूतम् । यो दैव्यानि मानुषा जनूꣳषि। अन्तर्विश्वानि विद्म ना जिगाति । इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरंचन जरसा मरते पतिः । इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **शुक्राय** नमः ।।५।।

ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाम् । इमं यमप्रस्तरमाहि सीदाऽङ्गिरोभिः पितृभिस्सविदानः । आत्वा मन्त्राःकविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **शनैश्चराय** नमः ।।५।।

ॐ कया नश्चित्र आभुवदूती सदावृधस्सखा । कया शचिष्ठया वृता । आऽयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरञ्च प्रयन्त्सुवः । यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् । इदन्ते तद्विष्याम्यायुषो न मध्यादथाजीवः पितुमद्धि प्रमुक्तः ।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहिताय भगवते श्री **राहवे** नमः ।।६।।

ॐ केतुङ्कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुशद्भिरजायथाः। ब्रह्मा देवानां पदवीः कवीनामृषीर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳस्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्। सचित्र चित्रं **चितयन्तमस्मे** चित्रक्षत्र चित्रतमं वयोधाम् । चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्रचन्द्राभिर्गृणते युवस्व।।

ॐ श्री अधिदेवता-प्रत्यधिदेवता-सहितेभ्यः भगवते श्री **केतुभ्यो** नमो नमः ।।९।।

ॐ आदित्यादि नवग्रह देवताभ्यो नमो नमः ।।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

----------------------

## ८८. घनपाठः

**कृष्ण करोती कल्याणम् कम्स कुंचर केसरी चल कालंती कल्लोल कोलाहल कुतोहरीः ।**

कृष्ण करोती करोती कृष्ण कृष्ण करोती कल्याणम् कल्याणम् करोती कृष्ण कृष्ण करोती कल्याणम् ।।

करोती कल्याणम् कल्याणम् करोती करोती कल्याणम् कम्स कम्स कल्याणम् करोती करोती कल्याणम् कम्स ।।

कल्याणम् कम्स कम्स कल्याणम् कल्याणम् कम्स कुंजर कुंजर कम्स कल्याणम् कल्याणम् कम्स कुंजला ।

कम्स कुंजल कुंजल कम्स कम्स कुंजल केसरी केसरी कुम्जल कम्स कम्स कुम्जल केसरीः । कुंजल केसरी केसरी कुंजल कुंजल केसरीः ।

केसरी ती केसरीः ।

कालंती चल-चल कालंती कालंती-चल कल्लोल कल्लोल-चल कालंती कालंती-चल कल्लोल ।

चल कल्लोल कल्लोल चल चल कल्लोल कोलाहल कोलाहल कल्लोल चल-चल कल्लोल कोलाहल ।

कल्लोल कोलाहल कोलाहल कल्लोल कल्लोल कोलाहल कुतोहरी कुतोहरी कोलाहल कल्लोल कल्लोल कोलाहल कुतोहरीः ।

कोलाहल कुतोहरी कुतोहरी कोलाहल कोलाहल कुतोहरीः । कुतोहरी ती कुतोहरीः । ॐ

—×—×—

## ८९. SEQUENCE OF ABHISHEKA DRAVYAMS FOR SRI RUDRABHISHEKAM

| Tamil | Telugu | Malayalam | English |
|---|---|---|---|
| 1) நல்லெண்ணெய் | నూనె | നല്ലെണ്ണ | Oil |
| 2) பஞ்சகவ்யம் | పంచగవ్యం | പഞ്ചഗവ്യം | Panchagavyam |
| 3) பஞ்சாமிருதம் | పంచామ్రుతం | പഞ്ചാമ്രതം | Panchamrutham |
| 4) நெய் | నెయ్యి | നെയ്യ് | Ghee |
| 5) பால் | పాలు | പാൽ | Milk |
| 6) தயிர் | మజ్జిగ | തൈര് | Yoghurt |
| 7) தேன் | తేనె | തേൻ | Honey |
| 8) கரும்புச்சாறு | చెరుకు రసం | കരിമ്പ് നീര് | Sugarcane juice |
| 9) எலுமிச்சைச் சாறு | నిమ్మ రసం | നാരങ്ങ നീര് | Lemon juice or orange |
| 10) இளநீர் | కొబ్బరికాయ నీళ్ళు | ഇളനീര് | Tender Coconut water |
| 11) சந்தனக்குழவை | గంధం | ചന്ദനം | Sandalwood paste |

+ Vibuthi for Mrutyunjaya mantram

+ திருநீறு - ம்ருத்யுன்ஜய மந்திரம் ஓதும் போது

విభూతితో మృతు

ഭസ്മം

## १०. HOW TO MIX PANCHAGAVYAM

## and

## WHAT MANTRAM TO BE RECITED WHILE MIXING EACH INGREDIENT

It has been clearly codified in *Dharmasastra* what ratio each ingredient to be applied while mixing Panchagavyam. It is measured as *"Phalam"*. *'One Phalam'* is equivalent to approximately 3 (silver) one rupee coin weight. The potency of panchagavya medicine increases when accompanied by the power of Mantra. Following mantras are to be recited when mixing each ingredient with pure water or rose water or Ganga water.

| Measurement to mix | Which mantra to be recited |
|---|---|
| 20ml Pure Water : | ओं भूर्भुवःसुवः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्। |
| Seven Phalam milk : | अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम। |
| One phalam cow-urine : half-thumb measured cow-dung. | गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्। |
| Three Phalam Yoghurt : | दधिक्राविण्णो अकार्षं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्रण आयूंषि तारिषत्।। आ दधिक्राः शवसा पञ्चकृष्टीः सूर्य इव ज्योतिषा पस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वासमिमा वचांसि।। |
| One Phalam cow Ghee | शुक्रमसि ज्योतिरसि तेजोसि देवो वःसवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।। |
| One Phalam Dharbhai or Grass Juice | no mantra required to be recited for this action - just bend the 2 edges of Dharbhai, scan the mixture surface and add two small broken peices of Dharbhai. |

**PANCHAGAVYA PRACHEENA MANTRAM (WHILE CONSUMING PANCHAGAVYAM)**

यतवगस्ति गदं पापं देहतिष्ठति मोमहें।। प्राशनं पंञ्चगव्यश्च दहतु अग्निरिवेन्धनं ।।

## ११. MEANING OF SANSKRIT WORDS USED IN POOJA

### 1. Neyvedyam

| | | |
|---|---|---|
| अपूपं | வடை, அப்பம் | doughnut |
| घृतं | நெய் | ghee |
| आज्योपहारं | ஒருவகை நெய் சாதம் | food made of ghee |
| इक्षु | கரும்பு | sugarcane |
| उर्वारुकं | வெள்ளரி | cucumber |
| गुडोपहारं, गुलोपहारं, | | |
| गुळोपहारं, गुळापूपः | அதிரசம் | sweet doughnut |
| गोक्षीरं | பசும்பால் | cow milk |
| घृतगुळपायसं | நெய், வெல்லப் | ghee & vellam mixed |
| | பாயசம் | paayasam |
| चणकः | கடலை | chick peas |
| चित्रान्नं | புளியோதரை | mixed color rice |
| जम्भीरफलान्नम् | எலுமிச்சை சாதம் | lemon rice |
| तक्रं | மோர் | butter milk |
| दधिः | தயிர் | yoghurt , curd |
| तिन्तिडिकान्नम् | புளியோதரை | tamarind rice |
| नालिकेरान्नम् | தேங்காய் சாதம் | coconut rice |
| तिलान्नम् | எள் சாதம் | seasame rice |
| शर्करान्नम् | சர்க்கரைப் பொங்கல் | sweet rice |
| दध्यन्नम्, दध्योधनम् | தயிர் சாதம் | yoghurt or curd rice |
| नवनीतम् | வெண்ணை | butter |
| नालिकेरः | தேங்காய் | coconut |
| नालिकेरखण्डद्वयं | தேங்காய் மூடிகள் (2) | **2 halves of coconut** |
| पानकं | பானகம் | jaggery crush |
| पानीयम्, अमृतपानीयम् | தெளிவான குடிநீர் | clear drinking water |

| | | |
|---|---|---|
| पृथुकः | அவல் | Flattened rice flakes |
| मधुरपिष्टकं | மாவிளக்கு மா | sweet flour |
| महानैवेद्यं | அன்னம், சாதம் | pure cooked rice |
| माषापूपम् | உளுந்து வடை | salted urad doughnut |
| मुद्गान्नम् | வெண்பொங்கல் | salt & peppered cooked rice |
| मोदकम् | கொழுக்கட்டை | fried or steamed eclair |
| रसखण्डम् | கற்கண்டுகட்டி | sugar crystal |
| लड्डुकम् | லட்டு | a sweetmeat |
| लवणं | உப்பு | table salt |
| लाजः | பொரி | puffed rice |
| व्यञ्जनम् | துணையுணவு | side dish |
| शर्करा | சர்க்கரை | sugar |
| शाल्यन्नम् | சம்பா அரிசி | red rice |

## 2. FRUITS - फलं - பழ வகைகள்.

| | | |
|---|---|---|
| कदली | கதலிப்பழம் | banana |
| कपित्थ | விளாம் | wood-apple |
| खर्जूर | பேரீச்சை | dates |
| सूतः | மா | mango |
| जम्भीरः | எலுமிச்சை | lemon |
| जम्बु | நாவல் | |
| दाडिमी | மாதுளை | pomogrenade |
| द्राक्षा | திராக்ஷை | grapes |
| नारङ्गः | ஆரஞ்சு | orange |
| पनसः | பலா | jack fruit |
| पेरी | பேரிக்காய் | pears |
| बदरी | எலந்தை | wild berry |

| | | |
|---|---|---|
| बीजापूरः | கொய்யா | gauva |
| माउलिङ्ग | துரிஞ்சி | |
| वेत्रः फलं | பெரப்பம்பழம் | |
| पिप्पलं | ஆப்பிள் | apple |

## १२. वारः च मासाः DAYS OF WEEK AND MONTHS வாரம் மற்றும் மாதங்கள்

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| Sunday | भानुवासरः | १. | चैत्र | मेषं | ७. | अश्विन | तुला |
| Monday | इन्दुवासरः | २. | वैशाख | वृषभ | ८. | कार्तिक | वृश्चिक |
| Tuesday | भौम वासरः | ३. | ज्येष्ठ | मिथुन | ९. | मार्गशीर्ष | धनुः |
| Wednesday | सौम्य वासरः | ४. | आषाढ | कर्कट | १०. | पुष्य | मकरः |
| Thursday | गुरु वासरः | ५. | श्रावण | सिंह | ११. | माघ | कुम्भ |
| Friday | भृगु वासरः | ६. | भाद्रपद | कन्या | १२. | फल्गुन | मीन |
| Saturday | स्थिर वासरः | | | | | | |

## १३.ऋतुः SEASONS காலங்கள்

| | | |
|---|---|---|
| वसन्त ऋतु | Chithirai - Vaikasi | (April 14 to June 15) |
| ग्रीष्म ऋतु | Aani - Adi | (June 16 to August 15) |
| वर्ष ऋतु | Aavani - Purattasi | (August 16 to October 15) |
| शरत् ऋतु | Aippasi - Karthigai | (October 16 to December 15) |
| हेमन्त ऋतु | Maarkazhi - Thai | (December 15 to February 14) |
| शिशिर ऋतु | Maasi - Panguni | (February 15 to April 13) |

## १४.ऋनक्षत्रानि - तमिल STAR NAMES IN TAMIL நக்ஷத்ரப்பெயர்கள்

01) Ashvini 2) Bharani, 3) Kaarthigai, 4) Rohini, 5) Mirugasheersham 6) Thiruvathirai
07) Punarpoosam 8) Poosam 9) Ayilyam 10) Makam, 11) Pooram 12) Uththiram
13) Hastham 14) Chiththirai 15) Swathi 16) Vishaka 17) Anusham 18) Kettai 19) Moolam
20) Pooradam 21) Uththiradam, 22) Thiruvonam 23) Avittam 24) Chathayam
25) Poorattathi 26) Uththirattathi 27) Revathi.

## १५. नक्षत्राणि -27 NAME OF STARS

| | | | | | |
|---|---|---|---|---|---|
| 1. | अश्विनी | Ashvini | 15. | स्वाती | Swathi |
| 2. | अपभरणी | Apabharani | 16. | विशाखा | Vishaka |
| 3. | कृत्तिका | Kriththika | 17. | अनूराधा | Anusham |
| 4. | रोहिणी | Rohini | 18. | ज्येष्ठा | Jyeshta |
| 5. | मृगशीर्षं | Mrugasheersham | 19. | मूला | Moola |
| 6. | आर्द्रा | Ardhra | 20. | पूर्वाषाढा | PoorvAshAda |
| 7. | पुनर्वसू | Punarvasoo | 21. | उत्तराषाढा | UththaraShada |
| 8. | पुष्य | Pushya | 22. | श्रवणं | Shravanam |
| 9. | आश्लेषा | Aashlesha | 23. | श्रविष्ठा | Shravishta |
| 10. | मघा | Magha | 24. | शतभिषक् | Shatabhishak |
| 11. | पूर्वफल्गुनी | Poorvaphalguni | 25. | पूर्वप्रोष्ठपदा | Poorvaproshtapada |
| 12. | उत्तरफल्गुनी | **Utharaphalguni** | 26. | उत्तरप्रोष्ठपदा | Uthtaraproshtapada |
| 13. | हस्तं | Hastham | 27. | रेवती | Revathi |
| 14. | चित्रा | Chithra | | | |

## १६. तिथि Thithi

| | तिथि | Thithi | | तिथि | Thithi |
|---|---|---|---|---|---|
| 1. | प्रथमा | **Prathama** | 10. | दशमी | **Dashamee** |
| 2. | द्वितीया | **Dvitiyaa** | 11. | एकादशी | **Ekadashee** |
| 3. | तृतीया | **Thruteeya** | 12. | द्वादशी | **Dvadashee** |
| 4. | चतुर्थी | **Chathurthi** | 13. | त्रयोदशी | **Thrayodashee** |
| 5. | पञ्चमी | Panchami | 14. | चतुर्दशी | **Chaturdashee** |
| 6. | षष्ठि | Shashti | | **पौर्णमी** | **Pournami** |
| 7. | सप्तमी | Saptamee | | | (or) |
| 8. | अष्टमी | Ashtamee | | **अमावास्या** | **Amavasya** |
| 9. | नवमी | Navamee | | | |

<u>Note</u>: From Pournami-Prathamai to Amavasya is *Krishna* paksham - From Amavasyai-Prathamai to Pournami is *Shulka* Paksham.

## १७. नक्षत्राणि, रासि चक्रं -27 STARS AND RASIS

| No. | Star | Name | Rasi |
|---|---|---|---|
| 1. | अश्विनी | Ashvini | Mesha |
| 2. | अपभरणी | Apabharani | Mesha |
| 3. | कृत्तिका | Kriththika (I Padam) | Mesha |
| 4. | कृत्तिका | Kriththika (II, III, IV Padha) | Vrishabha |
| 5. | रोहिणी | Rohini | Vrishabha |
| 6. | मृगशीर्षं | Mrugasheersham (I, II Padha) | Vrishabha |
| 7. | मृगशीर्षं | Mrugasheersham (III, IV Padha) | Mithuna |
| 8. | आर्द्रा | Ardhra | Mithuna |
| 9. | पुनर्वसू | Punarvasoo (I, II, III Padha) | Mithuna |
| 10. | पुनर्वसू | Punarvasoo (IV Padha) | Kataka |
| 11. | पुष्य | Pushya | Kataka |
| 12. | आश्लेषा | Ashlesha | Kataka |
| 13. | मखा | Makha | Simha |
| 14. | पूर्वफल्गुनी | Poorvaphalguni | Simha |
| 15. | उत्तरफल्गुनी | Utharaphalguni (I Padha) | Simha |
| 16. | उत्तरफल्गुनी | Utharaphalguni (II, III, IV Padha) | Kanya |
| 17. | हस्तं | Hastham | Kanya |
| 18. | चित्रा | Chithra (I, II Padha) | Kanya |
| 19. | चित्रा | Chithra (III, IV Padha) | Thula |
| 20. | स्वाती | Swathi | Thula |
| 21. | विशाखा | Vishakha (I, II, III Padha) | Thula |
| 22. | विशाखा | Vishakha (IV Padha) | Vrishchika |
| 23. | अनूराधा | Anusham | Vrishchika |
| 24. | ज्येष्टा | Jyeshta | Vrishchika |
| 25. | मूला | Moola | Dhanur |
| 26. | पूर्वाषाढा | PoorvAshAda | Dhanur |

| No. | Star | Name | Rasi |
|---|---|---|---|
| 27. | उत्तराषाढा | UththaraShada (I Padha) | Dhanur |
| 28. | उत्तराषाढा | UththaraShada (II, III, IV Padha) | Makara |
| 29. | श्रवणं | Shravanam | Makara |
| 30. | श्रविष्ठा | Shravishta (I, II Padha) | Makara |
| 31. | श्रविष्ठा | Shravishta (III, IV Padha) | Kumbha |
| 32. | शतभिषक् | Shatabhishak | Kumbha |
| 33. | पूर्वप्रोष्ठपदा | Purvaproshtapada (I, II, III Padha) | Kumbha |
| 34. | पूर्वप्रोष्ठपदा | Purvaproshtapada (IV Padha) | Meena |
| 35. | उत्तरप्रोष्ठपदा | Uthtaraproshtapada | Meena |
| 36. | रेवती | Revathi | Meena |

**------ END -------**

ॐ सह ना-ववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीत-मस्तु मा विद्विषावहै ।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

**------ END -------**